Mudrárákshasa
commentary by Táránáth
Tarkaváchaspati

# मुद्राराक्षसम् ।

## प्रथमोऽङ्कः ।

### नान्दी ।

धन्या केयं स्थिता ते शिरसि, शशिकला, किन्नु नामैतदस्याः,
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।

---

प्रणम्य परमात्मानं जगत्कारणमीश्वरम्
नाटकं व्याकरोम्येतत् मुद्राराक्षसनामकम् ।
अनूद्यन्ते प्राकृतानि संस्कृतैर्वाक्यविस्तरैः
ऋजु व्याख्यायते चेह दुर्बोधं संस्कृतं वचः ॥

(१) रङ्गविघ्नोपशान्तये सूत्रधारादिभिर्नान्दी अवश्यकर्त्तव्येत्यतस्तत्कृतां नान्दीं रूपकरूपदृश्यकाव्यकर्त्ता कविर्विशाखदेव आदौ निबध्नाति धन्येत्यादि । अत्र श्लोके चतुर्थचरणे आशीर्वादरूपा नान्दी तदुपयोगितया चरणत्रये हरपार्व्वत्योरुक्तिप्रत्युक्तिवाक्यानि उपनिबद्धानि । तत्रादौ शिवशिरसि स्थितां सुरसरितं समालोक्य खिद्यमाना पार्व्वती हरं पृच्छति धन्येत्यादि । त्रिभुवनगुरोरपि ते तव शिरसि स्थिता अतएव धन्या अतिमहाभाग्या इयं प्रत्यक्षतो दृश्यमाना का किंनामिकेति प्रथमप्रश्नवाक्यस्यार्थः । अत्र गङ्गाया धन्यत्वकथनेन आत्मनि दौर्भाग्य-

नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दु-,
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः (१) ॥

---

सूचनेन पार्व्वत्याः खेदो जात इति ध्वन्यते । सुरसरितं निह्नोतुमिच्छता भगवता पार्व्वतीप्रश्नस्य स्त्रीविषयकत्वेन स्वशिरसि स्थितायाः शशिकलायाः अपि स्त्रीत्वेन तत्परत्वं प्रकल्प्य उत्तरमभिधीयते शशिकलेति । मम शिरसि या स्थिता इयं शशिकला चन्द्रस्यावयवरूपा तस्याश्च भूषणार्थतया धारणात् न त्वया खेदो विधेय इति भावः । एवं भगवता उत्तरिते तदाक्ये शशिनः कलेतियोगार्थमपह्नाय स्वपृष्टायाः स्त्रियाः शशिकलेति संज्ञापरत्वमध्यवस्यन्त्या पार्व्वत्या पुनः पृच्छ्यते किन्नु नामैतदस्या इति । एतस्या दृश्यमानायाः स्त्रिया एतत् शशिकलेति नाम संज्ञा किन्नु किमु तथाच मत्पृष्टा स्त्री किं शशिकलानामिकेति द्वितीयप्रश्नार्थः तथाच भगवता यथा देवीपृष्टविषयस्याऽन्यपरत्वं समर्थ्योत्तरदाने चातुर्य्यं प्रकाशितम् तथा भगवत्यापि उत्तरवाक्यस्य यौगिकार्थपरतामपह्नाय स्वप्रश्नविषयभूतायाः स्त्रियाः शशिकलासंज्ञकत्वमुद्भाव्य चातुर्य्यं प्रकटितम् शठे शाठ्यं समाचरेदित्युक्तेस्तयापि शाठ्यमुररीकृतमिति बोध्यम् । एवं भगवत्या पृष्टे "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्" इति व्याकरणसिद्धान्तमनुसृत्य समस्तस्यापि शशिकलाशब्दस्य रूढ्या शशिकलारूपविशिष्टार्थबोधकतया तन्नामत्वमस्त्येवेत्याशयेनोत्तरयति नामैवास्या इत्यादि द्वितीयपादरूपमेकमुत्तरवाक्यम् । अस्याः प्रत्यक्षतो भवत्या दृश्यायास्तत् मदुक्तं शशिकलेत्येव नाम संज्ञा वाचकशब्द इत्यर्थः एतच्च तव परिचितं ज्ञातमपि कस्य हेतोः केन हेतुना विस्मृतम् शश्वत्परिचितस्य विस्मरणहेतुमन्तरेण विस्मरणासम्भवात् अविस्मरणे च ज्ञातत्वात्तत्र न प्रश्नो युक्त इति समुदितार्थः । कस्येत्यत्र 'षष्ठी हेतुप्रयोगे' इति

अपि च(१) ।

पादस्याविर्भवन्तीमवनतिमवनेरच्चतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्व्वलोकातिगानाम् ।
दृष्टिं लच्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् (२) ॥

---

षष्ठी । एवमस्फुटप्रश्ने चातुर्य्येण भगवता कृतमपह्नवमपाकर्त्तुं पार्व्वती स्पष्टतया पुनः पृच्छति नारीं पृच्छामि नेन्दुमिति तृतीयप्रश्नवाक्यम् । शशिकलाशब्दस्य स्त्रीलिङ्गत्वेऽपि तदर्थस्य चन्द्रावयवस्य चन्द्रपुंस्त्वेनैव पुंस्त्वान्न मत्प्रश्नस्य तद्विषयत्वं सम्भवतीत्याशयेनोक्तं नारीमिति नारीं स्त्रियं पृच्छामि नामतो ज्ञातुमिच्छामि न पुनरिन्दुं चन्द्रं तस्य पुंस्त्वेन प्रश्ना-विषयत्वात् । तेन तस्य परिचितत्वेऽपि न प्रश्नासङ्गतिरिति भावः । एवं पार्व्वत्या पृष्टे प्रच्छधातोर्द्विकर्म्मतया प्रश्नस्य मुख्यकर्म्मपरत्वं प्रकल्प्य शिव उत्तरयति कथयतु विजया न प्रमाणं यदीन्दुः इन्दुरिन्दुवाक्यं यदि तव प्रमाणं न तस्य पुंस्त्वात् भवत्या च नारीं प्रत्येव प्रश्नकरणात् इन्दोः प्रमाणाभावः सूचितः तदा सन्निहिता विजया स्त्रीत्वेन भवन्मते प्रमाणभूता सैव कथयतु किमस्मत्कथनेनेत्यर्थः । इति एवं चरणत्रयप्रति-पादितप्रकारेण देव्याः समीपे सुरसरितं गङ्गां निक्रोतुमपलपितुं गोपा-यितुमिति यावत् इच्छोर्विभोर्महादेवस्य शाठ्यं चातुर्य्यं वो युष्मान् रक्ष्-यान् सभ्यान् अव्यात् पायादित्याशीः ।

(१) विधित्सिताया अष्टपदात्मकनान्द्या अपर्य्यवसानं सूचयन् द्वितीयश्लोकमवतारयति अपि चेति ।

(२) पादस्येति । पादस्य चरणस्य जात्या निर्देशात् पादयोरित्यर्थः स्वैरपातैः यथेष्टं क्षेपणैः आविर्भवन्तीं जायमानाम् अवनेः पृथिव्या

नान्द्यन्ते (१)

सूत्रधारः (२) । अलमतिप्रसङ्गेन । आज्ञापितोऽस्मि (३) परिषदा यथाद्य सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्

---

अवनतिमधोगतिं पातालप्रवेशमित्यर्थः रक्षतः निवारयतः भूमेरवनतिर्माभूदित्याशयेन स्वैरपादप्रक्षेपं परिहरत इत्यर्थः । सर्व्वलोकातिगानामतिदीर्घतया अतिक्रान्तचतुर्द्दशभुवनानां दोष्णां बाहूनां सङ्कोचेन यथेष्ट प्रसारणाभावेनैव मुहुर्वारंवारम् अभिनयतः रसादिव्यञ्जनाय हस्तादिचेष्टां कुर्व्वतः, दाहभीतेः लक्ष्याणां भस्मीकरणाशङ्कातः ज्वलनकणमुचं वह्निस्फुलिङ्गवर्षिणीम् उग्राम् उत्कटाम् एकाग्रामित्यर्थः लक्ष्येषु दृश्येषु दर्शनं दृष्टिं न बध्नतो लक्ष्यदाहशङ्कया आसक्त्या लक्ष्याणि अपश्यत इत्यर्थः अथ वा वह्निस्फुलिङ्गवर्षिणीं अतएव उग्रां दृष्टिं तृतीयं नेत्रं न क्ष्मतः न क्षिपत इत्यर्थः । आधारानुरोधात् आधारस्य पृथिव्यादेरनुरोधात् अनुसारात् इति पूर्व्वोक्तप्रकारं त्रिपुरविजयिनो महादेवस्य दुःखन्दत्यं यथेष्टपादविक्षेपाभावेन सङ्कुचितन्दत्यं वो युष्मान् रङ्गस्थान् सामाजिकान् पातु रक्षतु ।

(१) आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजन्टपादीनां तस्मान्नन्दीति कीर्त्तिता ॥

इत्युक्तलक्षणा नान्दी सा च "पदैर्युक्ता द्वादशभिरष्टाभिर्वा भवेदुत" इत्युक्तेरिहाष्टपदात्मिका, तस्या नान्द्या अन्ते नान्दीं कृत्वेत्यर्थः ।

(२) नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥

इत्युक्तलक्षणः प्रधाननटो वक्ष्यमाणं वचनं कथयतीत्यध्याहार्य्यमेवं सर्व्वत्र ।

(३) रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेदित्युक्तेः सूत्रधारः नाटकरूपदृश्यकाव्यस्य, कवेश्चाख्यां तद्गोत्रादिकञ्चाह आज्ञापितोऽस्मीति ।

पृथुसूनोः कवेर्विशाखदेवस्य कृतिर्मुद्राराक्षसं नाम नाटकं (१) नाटयितव्यमिति । यत्सत्यं (२) काव्यविशेष (३) वेदिन्यां परिषदि प्रयुञ्जानस्य(४) ममापि चेतसि सुमहान् परितोषः प्रादुर्भवति ।

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते (५) ॥

---

(१) नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ।
एक एव भवेदङ्गी शृङ्गारो वीर एव वेत्युक्तलक्षणं नाटकम् । अत्र च प्रख्यातनन्दवंशजस्य चन्द्रगुप्तस्य दिव्यत्वाभावेऽपि दिव्यादिव्यरूपत्वमवसेयं धीरोदात्तत्वादिगुणत्वमस्याग्रे स्फुटतरं भविष्यति । अत्र वीरएव रसः । एकेन प्रयोजनेनान्वितानां कथांशानामनन्तरैकप्रयोजनसम्बन्धरूपस्य सन्धेर्यथायथमूह्यता ।

(२) यत् सत्यमिति पददयं समुदितैकशब्दस्य असंभाव्यार्थकत्वेऽपि नास्य तथात्वम् तथाच परितोषः प्रादुर्भवति इति यत्, तत् सत्यमेव ।

(३) विशिष्यतेऽनेन विशेषो भेदको धर्म्मः गुणदोषौ हि काव्यभेदकौ, तद्वेदिन्यां काव्यस्य गुणदोषवेदिन्याम् । परिषद्वृत्तिजनानां तद्वेदित्वात् समुदाये तथात्वारोपः ।

(४) प्रयुञ्जानस्य प्रयोगमभिनयं कुर्व्वतः ।

(५) परिषदि प्रयुञ्जानस्येत्यनेन परिषत्समीपे प्रयोगएव सन्तोषकारणं यदुक्तं तत्र परिषद्रूपपात्रस्यैव प्राधान्यात् उत्कर्षाधायकतेत्यत्र दृष्टान्तमाह चीयते इत्यादि । बालिशस्य अनिपुणस्यापि कृषिः कर्षणादि-

तद्यावदिदानीं गृहं गत्वा गृहिणीमाहूय गृहजनेन सह सङ्गीतकमनुतिष्ठामि। परिक्रम्यावलोक्य च। इमे नो गृहास्तद्यावत् प्रविशामि। नाट्येन (१) प्रविश्यावलोक्य च। अये तत् किमिदमस्मद्गृहेषु महोत्सव इव दृश्यते स्वस्वकर्मण्यधिकतरमभियुक्तः (२) परिजनः। तथाहि

वहति जलमियं पिनष्टि गन्धा-
नियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदमियञ्च पातकाले
मुहुरनुयाति कलेन हुङ्कृतेन (३)॥

भवतु कुटुम्बिनीमाहूय पृच्छामि। नेपथ्या(४)भिमुखमवलोक्य।

---

व्यापारः सत्यात्रे उर्वरायां भूमौ पतिता अनुष्ठिता सती उपचीयते फलाधिक्यदायितया स्वयमेव वर्द्धते। चीयते इति कर्मकर्त्तरि लट्। किञ्च शालेः व्रीहेः स्तम्बकरिता पुष्कलता वप्तुः वीजरोपिणः कर्षकस्य गुणं नैपुण्यं नापेक्षते नानुरुध्यते किन्तु क्षेत्रस्यैव गुणमुत्कर्षमुर्व्वरात्वमपेक्षते एतेन क्रियाधारपात्रस्यैव प्राधान्यं न कर्त्तुरित्युक्तमिति भावः।

(१) नाट्येन नटोचितेन भङ्गीविशेषेण।

(२) अभियुक्तः अभिनिविष्ट आसक्त इति यावत्।

(३) अभिनिवेशप्रकारमाह वहतीति। गन्धान् गन्धाढ्यान् उद्ग्रथते उत्क्षिप्य पुष्पादिकमुच्चित्य वा ग्रथते। पातकाले कण्डनार्थं धान्याद्युपरि मुसलक्षेपकाले मुसलं मुसलपातशब्दमित्यर्थः कलेन मधुरास्फुटेन हुङ्कृतेन अनुयाति अनुकरोति।

(४) 'नेपथ्यं नाट्यशालायां नेपथ्यं च विभूषणे' इत्युक्तेर्नेपथ्यं नाट्यशाला जवनिकान्तर्भूमिरिति यावत् तस्या अभिमुखं सम्मुखम्।

गुणवत्युपायनिलय! स्थितिहेतो! साधिके! त्रिवर्गस्य।
मद्भवननीतिविद्ये! कार्य्यादार्य्ये! द्रुतमुपैहि (१)॥

प्रविश्य नटी। अज्जउत्त! (२) इअह्मि असाणिओएण मं अणुगेह्णदु अज्जो।

सूत्र। आर्य्ये! तिष्ठतु तावदाज्ञानियोगः, कथय किमद्य भवत्या भगवतां ब्राह्मणानामुपनिमन्त्रणेनैतत् कुटुम्बक-(३) मनुगृहीतम्, अथ वा अभिमता (४) भवनमतिथयः प्राप्ता यदेष पाकविशेषारम्भः।

नटी। अज्ज (५) आमन्तिदा मए भअवन्तो बह्मणा।

---

(१) हे उपायनिलय! सर्व्वाज्जनसाधनाधार! निलयशब्दस्य अच्प्रत्ययान्तत्वात् नियतलिङ्गता। स्थितेर्मर्य्यादाया हेतो! त्रिवर्गस्य धर्म्मार्थकामानां साधिके! "गृहिणी गृहमुच्यते तया हि पुरुषः सर्व्वान् पुरुषार्थान् समश्नुते" इति स्मृतेः। मम भवने या नीतिः रीतिस्तस्याः प्रकाशकत्वात् विद्येव विद्ये! प्रकाशिके! आर्य्यचरितत्वादार्य्ये! कार्य्यात् कार्य्यार्थं हेतौ पञ्चमी फलमपीह हेतुरित्युक्तेः अध्ययनेन वसतीत्यादिवत्। उद्देश्यरूपफलस्यापि हेतुत्वाङ्गीकारात् द्रुतमित्यनेन विलम्बासहिष्णुत्वरूपमौत्सुक्यं द्योत्यते।

(२) आर्य्यपुत्र! इयमस्मि आज्ञानियोगेन मामनुगृह्णातु आर्य्यः सं० आर्य्यस्य श्वशुरस्य पुत्र! आज्ञासु आज्ञासाध्यकार्य्येषु नियोगेन नियोजनेन इदं क्रियतामित्युक्तरूपेण।

(३) कुटुम्बानां समूहः कुटुम्बकं समूहार्थे कन्।

(४) अभिमताः श्रेष्ठाः।

(५) आर्य्य! अद्य आमन्त्रिता मया भगवन्तो ब्राह्मणाः सं० आमन्त्रिता निमन्त्रिताः इत्यर्थः।

सूत्र । कथय कस्मिन्निमित्ते (१) ।

नटी । उवरज्जदि किल भअवं चन्दो त्ति (२) ।

सूत्र । क एवमाह ।

नटी । एवं क्खु णअरवासी जणो मन्तेदि (३) ।

सूत्र । आर्य्ये ! कृतश्रमोऽस्मि चतुःषष्ठ्यङ्गे (४) ज्योतिःशास्त्रे तत् प्रवर्त्त्यतां भगवतो ब्राह्मणानुद्दिश्य पाकः, चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि (५) । पश्य

क्रूरग्रहः (६) सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्— इत्यर्द्धोक्ते ।

---

(१) केन हेतुनेत्यर्थः निमित्तवचनप्रयोगे सर्व्वासां प्रायोदर्शनमितुग्रक्तेः सप्तमी ।

(२) उपरज्यति किल भगवान् चन्द्र इति सं० । उपरज्यतीति दैवादिकस्य उपरञ्जेः रूपम् ।

(३) एवं खलु नगरवासी जनो मन्त्रयति सं० । कथयतीत्यर्थः ।

(४) चतुःषष्टिरङ्गानि प्रतिपाद्यप्रकारा यस्य तस्मिन् ज्योतिषां ग्रहनक्षत्रादीनां गतिप्रभृतिज्ञापकं शास्त्रं संहितासिद्धान्तादिकं तत्र ।

(५) चन्द्रोपरागपरागं प्रति ग्रहणविषये विप्रलब्धा विसंवादिवचनेन अयथार्थवाक्येन प्रतारिता विप्रलम्भो विसंवाद इत्यमरः ।

(६) विप्रलम्भं प्रकटयितुं सम्प्रति ग्रहणासम्भवं दर्शयति क्रूरग्रह इति । सकेतुः सपातः चन्द्रतुल्यकान्तिश्च; । सहोदरशब्दवत् सहशब्दादेशस्य सशब्दस्य समानार्थत्वम् । क्रूरग्रहः भूच्छायारूपतमोऽधिदेवो राहुः इदानीं सम्प्रति असंपूर्णमण्डलम् अपरिपूर्णविम्बं चन्द्रम् बलात् हठात् प्रसभमित्यर्थः ग्रहणस्य प्रतिपत्पञ्चदश्योरन्तरालकाले एव चन्द्रविम्बस्य पूर्णतायां सम्भवेन इदानीमसंपूर्णमण्डलतया न तद्योग्यकालता

नेपथ्ये

आः (१) क एष मयि स्थिते [चन्द्र] मभिभवितुमिच्छति बलात् ।

---

अतो बलादित्यनेनायोग्यकालता द्योतितेति द्रष्टव्यम् । अभिभवितुमाक्रमितुं छादयितुं ग्रसितुमिति यावत् । इच्छति प्रवणीभवति कूलं पिपतिषतीतिवत् अचेतनेऽपि भूमिच्छायारूपे तमःपदार्थे इच्छतीत्युक्तम् सिद्धान्ते हि सूर्य्यकिरणा एव जलीयमण्डले चन्द्रे प्रतिविम्बितास्तस्य भासकतया रात्रितमोनाशकाः "सलिलमये शशिनि रवेर्दीधितयः प्रतिमूर्च्छिता" इत्याद्युक्तेः । रवेः समानक्रान्तिवृत्तस्थे चन्द्रे च सूर्य्याचन्द्रमसोर्मध्यगतभूगोलच्छायाच्छादनं तदेव ग्रहणम् छाया च प्रकाशाभावरूपतया तमोरूपा तदधिष्ठातृदेवता च राहुग्रहः अतएव "राहुर्वै हस्ती भूत्वा चन्द्रमसं गृह्णाती"ति श्रुतौ राहोर्हस्तिरूपत्वकथनं तमसि नीलत्वारोपेण, हस्तिसदृशनीलच्छायारूपी भूत्वेत्यर्थः सिद्धान्तसम्मतोऽवसेयः । भूमिच्छायाच्छादनमपि पूर्णविम्बस्यैव तच्च पर्व्वसन्धिकाल एव नान्यदेति सिद्धान्ते स्थितम् । इदानीञ्च पूर्णत्वाभावात् न ग्रहणसम्भव इति भावः । अनेन वाक्येन प्रकरणप्रतिपाद्यस्य चन्द्रगुप्तं प्रति राक्षसेन सहितमलयकेतुनाऽभियोगस्य श्लेषेण सूचनात् श्लिष्टार्थमादायैव चाणक्यरूपपात्रप्रवेशो वर्णनीय इति श्लिष्टार्थस्तावदभिधीयते । सकेतुः मलयकेतुना सह क्रूरकर्म्मणि कूटव्यवहारादौ ग्रहो ग्रहणमासङ्गो यस्य सः राक्षस इत्यर्थः इदानीं सम्प्रति असम्पूर्णमण्डलमचिरराज्याभिषिक्ततया स्वस्य सम्यगाज्ञाप्रचाराभावेन अस्वाधीनप्रकृतिमण्डलं चन्द्रं चन्द्रगुप्तम् बलात् बलं सामर्थ्यं मित्रादिसैन्यं वा आश्रित्य बलादित्यत्र ल्यब्लोपे पञ्चमी । अभिभवितुं पराभवितुमिच्छति ।

(१) एवम् अन्यार्थकं सूत्रधारवाक्यं श्रुत्वा वाक्यस्यासमाप्तावेव

सूत्र। रक्षत्येनं तु बुधयोगः (१)।

---

तद्वाक्यं प्राग्दर्शितश्लिष्टार्थपरमाशङ्क्य नेपथ्यान्तर्गतएव चाणक्यस्तदभियोगमसहमानः कथयति आ इत्यादि। आ इति कोपसूचकम् मयि स्थिते चन्द्रं चन्द्रगुप्तमभिभवितुमिच्छति बलात् यः स एष कः इत्यन्वयः। क्वचित् कथयेत्यधिकपाठः। तत्र क इत्यनेनैव तत्कथनप्रश्नेऽपि कालविलम्बासहिष्णुताद्योतनार्थं कथनाय प्रश्नस्तेन च तस्यासह्यत्वात्तत्प्रतिकारेच्छेति ध्वनिः। [चन्द्रगुप्त]मित्यपपाठ उत्तरस्थनटीप्रश्नस्यासङ्गतेः।

(१) सूत्रधारस्तु स्ववाक्यसमाप्तौ व्यासङ्गवशात् तद्वाक्यमनाकलय्यैव वाक्यं समापयन्नाह रक्षत्येनं त्विति। बुधयोगः बुधेन सह चन्द्रस्य योगः एकराश्यवस्थानरूपः सहवासः एनं चन्द्रं रक्षति ग्रहात् वारयति। चन्द्रबुधयोरेकराशिस्थत्वोक्त्यापि भङ्ग्याऽसंपूर्णविम्बत्वं सूचितम्। सूर्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासीति श्रुत्या तयोरत्यन्तविप्रकर्षकाले एव पौर्णमास्याः सम्भवस्य दर्शिततया परमविप्रकर्षस्य च राशिषट्कान्तरे एव सम्भवेन बुधस्य रविराश्यपेक्षया द्वित्रराश्यन्तरालएव स्थितेर्नियततया बुधयोगेन चन्द्रस्यापि द्वित्रराश्यन्तराल एव स्थितेरवगमात् न परमविप्रकर्षो नातोऽपि संपूर्णमण्डलत्वं चन्द्रस्येति न ग्रहणसम्भव इति भावः। एतेन चन्द्रं संपूर्णमण्डलमिति पाठः प्रामादिक एव बुधयोगकाले चन्द्रस्य कदाचिदपि संपूर्णमण्डलत्वासम्भवात्। श्लिष्टार्थस्तु बुधस्य चाणक्यस्य योगः कर्म्मसु कौशलम् एनं प्रागुक्तं चन्द्रगुप्तं रक्षति क्रूरग्रहाभिभवात् निवारयतीति। अत्र श्लेषगण्डरूपो नाटकालङ्कारः "द्व्यर्थत्वात् यत्र वाक्यानां श्लेषेणार्थः प्रतीयते। शब्दभङ्ग्याऽनुपात्तोऽपि श्लेषगण्डः स उच्यते" इति भरतोक्तेः। अनुपात्तः अप्राकृतः अधिकारात् प्राकृत इत्यर्थः।

नटी। अज्ज! को उण एसो धरणिगोअरो भविअ चन्दं ग्गहाभिजोआदो रक्खिदुं इच्छदि (१)।

सूत्र। आर्ये! यत् सत्यं(२) मयापि नोपलक्षितः। भवतु भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये। क्रूरग्रह इत्यादि पुनस्तदेव पठति।

---

(१) नटी एवं सूत्रधारस्य वाक्यसमाप्तौ रङ्गभूमौ प्रवेक्ष्यमाणस्य चाणक्यस्य पात्रस्य प्रवेशसूचनाय नाम पृच्छति अज्जेति। आर्य! अथ कः पुनरेष धरणीगोचरो भूत्वा चन्द्रं ग्रहाभियोगात् रक्षितुमिच्छति सं०। मयि स्थिते इत्यनेन स्वस्य स्थितौ चन्द्रस्य क्रूराभिभवो न सम्भवतीत्युक्तम् तेन च स्वस्य तद्रक्षकत्वमर्थायातमिति नेपथ्ये तद्वाक्यप्रयोक्तुरक्षणासामर्थ्यं द्योतयितुं धरणीत्यादि विशेषितम्। धरणिर्गोचरो विषयोदेशो यस्य स भूमिदेशस्थ इत्यर्थः भूमिस्थत्वेन रक्ष्यरक्षकयोः भिन्नस्थानत्वात् कथं रक्षकत्वसम्भव इति प्रश्नार्थः तेन तत्र रक्षणस्य शब्देन स्पष्टमनुक्तावपि न क्षतिरिति द्रष्टव्यम्।

(२) धरणिस्थस्य चन्द्रग्रहणनिवारकत्वं न सम्भवतीति यदुच्यते तत्सत्यमित्यर्थः। किन्तु स्ववाक्यसमाप्तौ व्यासङ्गवता मया कतमोऽसौ इति नोपलक्षितः नेपथ्यान्तर्गतत्वेन न दृष्टः नापि स्वरविशेषादयममुक इति अनुमितः व्यासङ्गान्तरे स्वरविशेषज्ञानाभावादित्यर्थः। अभिभूय पुनरपि प्रागुक्तं पठित्वेत्यादि। तत्पठने हि तस्याभिभवो भविष्यतीति भावः। अभियुक्तः अभिनिविष्टः संहितचेता इत्यर्थः। स्वरव्यक्तिं स्वरेण तारमन्दादिकण्ठस्वरविशेषेण व्यक्तिं तदाधारभूतं जनमित्यर्थः उपलप्स्ये एतद्वाक्यप्रयोक्ता अमुकनामा प्रागनुभूतस्वरविशेषाश्रयत्वादित्यनुमास्यामीत्यर्थः।

नेपथ्ये

आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात्।

सूत्र। आकर्ण्य। आः ज्ञातम्। कौटिल्यः—(१)

नटी। भयं नाटयति (२)।

सूत्र। ——कुटिलमतिः स एष येन

क्रोधाग्नौ प्रसभमदाहि नन्दवंशः।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्य्येन्दोर्द्विषदभियोग इत्युपैति (३)॥

---

(१) स्वरविशेषेण तद्वाक्यप्रयोक्तारं चाणक्यमुपलभ्य सूत्रधारः। नटीं प्रति गुणतत्त्वं वर्णयितुमुपक्रमते कौटिल्य इति कौटिल्यश्चाणक्यः।

(२) अत्यन्तकोपनतया प्रसिद्धस्य चाणक्यस्य नाममात्रश्रवणेऽपि नष्टाश्वासाविर्भाव इत्याह नटीत्यादि कवेरुक्तिः। नाटयति नटकर्म्मणा देहादिचेष्टया स्वगतं भयं व्यञ्जयति। चाणक्यगुणवर्णनासमाप्तावपि नामग्रहणमात्रेण त्रासवर्णनं तस्य अतीव दुःसहकोपनतासूचनार्थमिति द्रष्टव्यम्।

(३) कुटिलमतिरित्यस्मिन् पदैकरहिते श्लोके प्राक् सूत्रधारपठितं कौटिल्य इति पदमाकृष्य पूरणीयम्। येन चाणक्येन क्रोधः (मुक्तां शिखां परामृशन्नित्यत्र वक्तव्यकारणजः) कोपः अग्निरिव तत्र, नन्दवंशः नन्दस्य योगानन्दस्य वंशः कुलं स्वात्मना सह योगानन्दस्य अष्टौ पुत्रा इत्यर्थः। 'नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यतीति' पुराणे चाणक्यस्य नवनन्दहन्तृत्वमुक्तमत्रानुसर्त्तव्यम्। प्रसभं हठात् शीघ्रं न तु बहुकालेनेत्यर्थः। अदाहि दग्धः। आः क एष इत्यादिवाक्यप्रयोक्ता स कुटिल-

तदित आवां गच्छाव । इति निष्क्रान्तौ ।

प्रस्तावना (१) ।

ततः प्रविशति मुक्तां शिखां (२) परामृशंश्चाणक्यः ।

चाण । कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितु-मिच्छति बलात् ।

---

मतिरत्यन्तवक्रस्वभावः कौटिल्यश्चाणक्यः कुटिलस्वभावत्वात् तस्य कौटिल्य इत्यन्वर्थनामतेति द्योतयितुं कुटिलमतिरिति विशेषितम् श्रुतेः क्रूरग्रह इत्यादि वाक्यस्येत्यादि तस्य श्रवणात् चन्द्रस्य ग्रहणमित्यर्थपरे तद्वाक्ये सनाम्नस्तुल्यनामकस्य चन्द्रसदृशनाम्नश्चन्द्रगुप्तस्येत्यर्थः मौर्य्येन्दोः प्रख्यातनन्दस्य मुरायां मुरनाम्न्यां भार्य्यायां भवः मौर्य्यः स इन्दुरिवः तस्य, द्विषता मलयकेतुसहितेन राक्षसेनाभियोगम् आक्रमणमिति उपैति उपगच्छति जानातीत्यर्थः । अथ वा इति ज्ञात्वा तदसहमानः क्रोधेन इह रङ्गभूमौ उपैति उपागच्छति प्रविशतीति यावत् ।

(१) "नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते । आमुखं तद्विजानीयात् बुधैः प्रस्तावनोच्यते" इत्युक्तलक्षणा नान्दी सा चेह कथोद्घातरूपा सूत्रधारोक्तवाक्यस्यार्थमादाय चाणक्यरूपपात्रस्य प्रवेशात् यथोक्तं दर्पणे "सूत्रधारस्य वाक्यं वा समादायार्थमेव वा । भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते" इति ।

(२) श्राद्धे निमन्त्रितस्य भोजनाय पीठोपरि उपविष्टस्य, केशाकर्षणेन ततो वहिष्कृतस्य स्वस्य तत्काले मुक्तामसंयतां नन्दवंशस्य समूलनाशपर्य्यन्तं बन्धनराहित्येन प्रतिज्ञातामित्यर्थः शिखां शिरःस्थित केशसंहतिं परामृशन् हस्तेन स्पृशन् अनुसंदधत् बुद्धिस्थां कुर्व्वन् वा ।

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् (१)॥

अपिच।

नन्दकुलकाल[भुजगीं] कोपानलबहल[लोल]धूमलताम्।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे (२)॥

---

(१) को जनः जृम्भया विदारितं प्रसारितं मुखं यस्य तथोक्तस्य हरेः सिंहस्य मुखात् आस्वादितेन लीढेन द्विरदशोणितेन गजरुधिरेण शोणा रक्तवर्णा शोभा यस्याः तादृशीं सन्ध्यारुणां सन्ध्यारागेणारुणां रक्तवर्णां शशलाञ्छनस्य चन्द्रस्य कलामिव स्फुरन्तीं प्रकाशमानां चञ्चलाञ्च दंष्ट्रां दन्तम् अभिभूय हरिमभिभूय हर्त्तुमिच्छति। यथा सिंहाभिभवेन तद्दन्तग्रहणेच्छा स्वनाशायैव तथा ममाभिभवेन चन्द्रगुप्तश्रीग्रहणेच्छेति भावः। सन्ध्यारुणामित्यनेनास्याभ्युत्थानावस्थेति ध्वनिः।

(२) मुक्तां शिखां स्पृशन्नित्यनेन शिखामोचनापराधजनितनन्दवंशहननरूपं कार्य्यं समापितमिदानीं प्रतिज्ञातार्थसिद्धेः तत्संयमनावसरः प्राप्तः इति तद्बन्धायोद्यमः सूचितः किन्तु पुनरपि चन्द्रगुप्ताभिभवोक्त्या कोपोपशमनं न जातमिति दर्शयन्नाह नन्देति। बधमर्हतीति बध्यः को जनः नन्दकुलस्य कालभुजगीं कृष्णसर्पीं नाशकत्वात् कोपानलस्य बहला अत्यन्ता लोला चञ्चलेत्यर्थः धूमोलतेव तां मम शिखां बध्यमानां प्रतिज्ञातार्थपूर्त्तौ संयन्तमारभ्यमाणां [नीलेति] पाठे अत्यन्तनीलेत्यर्थः अद्यापि नेच्छति अद्यापीत्यनेन मच्छिखामोचनफलं नन्दवंशनिधनं प्रत्यक्षतो दृष्ट्वाऽपि मदनभिप्रेतवस्तुकरणायोद्यमः अविमृष्यकारितैवेति सूचितम्। अत्र [भुजङ्गी]मित्यपपाठः छन्दोभङ्गात्।

अपिच ।

उल्लङ्घयन् मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।
सद्यः परात्म[परिणाम]विवेकमूढः
कः शालभेन विधिना लभतां विनाशम् (१) ॥

शार्ङ्गरव ! शार्ङ्गरव !

प्रविश्य शिष्यः । उपाध्याय ! आज्ञापय ।

चाण । वत्स ! उपवेष्टुमिच्छामि ।

शिष्यः । उपाध्याय ! नन्वियं सन्निहितवेत्रासनैव द्वार-प्रकोष्ठशाला तदस्यामुपवेष्टुमर्हत्युपाध्यायः ।

चाण । वत्स ! कार्य्याभियोग (२) एवास्मानाकुलयति न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता । नाच्चेनोपविश्यात्म-

---

(१) परेणान्येनात्मनः स्वस्य परिणामे दशान्तरप्रापणे यो विवेकः एतत्कर्म्मकरणे ममेदं फलं स्यादित्याकारज्ञानं तत्र मूढ़स्तच्छून्य इति यावत् । [परिमाणेति]पाठे परस्यात्मनश्च परिमाणे परिच्छेदने दाह्यत्व-दाहकत्वरूपविशेषे इत्यर्थः अन्यत् समानम् । को जनः नन्दकुलं कानन-मिव नाश्यत्वात् तत्र धूमकेतुर्वह्निरिव नाशकत्वात् तस्य, अतएव प्रचुर-दाह्यदाहात् समुज्ज्वलतः देदीप्यमानस्य अनिवार्य्यवेगस्येत्यर्थः मम कोपस्य प्रतापं दुःसहतेजः उल्लङ्घयन् अतिक्रामन् सन् शालभेन शलभेन पतङ्गेन परिचितेन विधिना व्यापारेण सद्यस्तत्क्षणात् अग्निवेशनमात्रकालात् विनाशं लभताम् प्राप्नुयात् । सम्भावनायां लोट् ।

(२) कार्य्ये अवश्यकर्त्तव्ये तदुपयोगिविषयान्तरे वा यः अभियोगः अभिनिवेशः मनःसमाधिरिति यावत् स आकुलयति व्याकुलान् करोति न

गतम् (१)। कथं प्रकाशतां गतोऽयमर्थः पौरेषु, यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृबधामर्षितेन (२) सकलनन्दराज्यपरिपणनप्रोत्साहितेन (३) पर्व्वतकपुत्त्रेण मलयकेतुना सह सन्धाय, तदुपगृहीतेन च महता म्लेच्छ-राजेन परिवृतो वृषल(४) मभियोक्तु(५)मुद्यत इति। विचिन्त्य। अथ वा येन मया सर्व्वलोकप्रकाशं नन्दवंशबधं प्रतिज्ञाय

---

पुनः सह भवतीति सहभूः सोदरा सदृशीत्यर्थः। उपाध्यायकर्त्तव्य-तुल्येति यावत् शिष्यजने भवादृशे दुःशीलता अकर्त्तव्याचारः आकुल-यतीत्यनुषङ्गः। अयं भावः गुरुभिरभीष्टान्वेषणे हि शिष्यैरन्यतस्तदा-हरणमेव विधेयं शिष्येण चाभीष्टान्वेषणे तु गुरुणा तत्स्थानोपदेश एव कर्त्तव्यो नतु तदाहरणं, भवता च अनादायैवासनं तत्स्थानस्योपदेशात् उपाध्यायसदृशी वृत्तिराहृता सा तु शिष्यजने भवादृशे दुःशीलतापि कार्य्यान्तराभिनिविष्टं मां नाकुलयतीति अस्मानित्यत्र अविशेषणत्वे नै-कत्वेऽपि बहुत्वम्।

(१) आत्मगतं स्वगतं सर्व्वजनाश्रव्यं सामाजिकमात्रश्रव्यमित्यर्थः "यत्तु श्रव्यं न सर्व्वस्य स्वगतं तदिहोच्यते इति भरतवाक्ये' सर्व्वपदस्य सामाजिकातिरिक्तपरत्वात्।

(२) पितुः पर्व्वतकस्य बधेन विषकन्यया चाणक्येन हननेन अम-र्षितेन क्रुद्धेन।

(३) सकलनन्दराज्यस्य परिपणनं चन्द्रगुप्तजये ग्लहत्वेन दाना-ङ्गीकारः तेन प्रोत्साहितेन कृतोत्साहेन।

(४) वृषलं शूद्राक्षेत्रजातत्वात् शूद्रं चन्द्रगुप्तम्।

(५) अभियोक्तुं युद्धायाभिमुखीकर्त्तुम्।

निस्तीर्णा दुस्तरा प्रतिज्ञासरित् सोऽहमिदानीं प्रकाशीभवन्त-मप्येनमर्थं(१) न समर्थः किं प्रशमयितुमिति।

कुत एतत्। यस्य मम (२)

श्यामीकृत्याननेन्दून् रिपुयुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य।
दग्ध्वा सम्भ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदात् ज्वलन इव वने शाम्यति क्रोधवह्निः(३)॥

(१) एनमर्थं मलयकेतुना कृतं चन्द्रगुप्ताभियोगं, प्रशमयितुं निवारयितुम्।

(२) यस्य ममेति गद्यस्थं पदद्वयं पद्येऽनुषञ्जनीयम्।

(३) यस्य मम क्रोधवह्निः सन्ततैः रिपुयुवतीनां पतिमरणात् विस्तीर्णैः शोकाः पतिवियोगमन्युरूपाः खेदा एव धूमास्तैः रिपुयुवतय एव दिशः हरितस्तासाम् आननानि मुखान्येव इन्दवस्तान् श्यामीकृत्य मलिनीकृत्य मन्त्रिणः नन्दसचिवा एव द्रुमास्तेभ्यो नयो नीतिरेव पवनो मारुतः वेगवत्त्वात् विक्षेपकत्वाच्च तेन हृतं चालितं मोहः कर्त्तव्येऽनध्यवसाय एव भस्म तत् कामं यथेष्टं प्रकीर्य विक्षिप्य, नन्दवंश एव वंशः कीचकः श्लिष्टत्वात् तस्य प्ररोहान् अङ्कुरान्। संभ्रान्ता मान्या ये पौराः पुर-वासिनस्त एव द्विजगणाः पक्षिसमूहास्तेन रहितान् तच्छून्यानित्यर्थः दग्ध्वा निःशेषेण भस्मीकृत्य दाह्यस्य नाश्यस्यान्यस्याभावात् विरहादेव न तु खेदात् परिश्रमादित्यर्थः वने ज्वलन इव दावानल इव शाम्यति उपरतो भवति। ज्वलनस्य सादृश्यविधयोक्तत्वेऽपि पुनः क्रोधवह्नित्वा-रोपणं साहजिककोपवह्नेरसह्यत्वद्योतनार्थम् राजेन्दुरिन्दुः क्षीर-निधाविवेत्यादिवत् बोद्धव्यम्।

अपिच ।

शोचन्तोऽवनतैर्नराधिपभयाद्धिक्शब्दगर्भैर्मुखै-
र्मामग्रासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा ।
ते पश्यन्तु तथैव सम्प्रति जनाः नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात् सिंहासनात् पातितम् (१) ॥

सोऽहमिदानीमवसितप्रतिज्ञाभरोऽपि (२) वृषलापेक्षया शस्त्रं धारयामि । येन मया (३)

---

(१) ये दर्शका उदासीनाश्च जनाः नराधिपात् योगानन्दात् भयं तदादिष्टकर्म्मणि निन्दितत्वकथने राज्ञः स्वात्मनि क्रोधः स्यादिति यत्त्रासस्तस्मात् धिक्शब्दागर्भं येषां तैरव्यक्तधिक्शब्दैः उपांशूच्चारित-धिक्शब्दैः अवनतैः अनुचितकर्म्मणो दर्शनेऽपि दोषः स्यादित्याशयेन नम्रीकृतैर्मुखैरुपलक्षिताः शोचन्तः अन्तःशोकं कुर्व्वन्तः सन्तः मां चाणक्यम् अग्रासनतः आद्यीयविप्रयोग्यविष्टरनामकासनात् अवकृष्टं पुरा अवशम् अनायत्तप्रतीकारं यथा स्यात्तथा मामित्यस्य विशेषणं वा तत्काले प्रतिकारासमर्थमित्यर्थः दृष्टवन्तः, ते जना इदानीं सिंहासनात् सिंह-लक्षणयुक्तराज्यासनात् सान्वयं ससन्तानं न केवलमेकमित्यर्थः नन्दं योगानन्दं पातितं च्यावितं सम्प्रति तथैव शोचन्त एव पश्यन्त नन्देन यथा ममापकृतं मयापि तस्य तथैवापकृतमिति द्योतनाय तथैवेति शब्दौ ।

(२) प्रतिज्ञा भर इव दुःखेन वाह्यत्वात् अवसितः समाप्तः प्रतिज्ञाभरो यस्य । अवपूर्व्वकात् स्यतेः कर्त्तरि क्ते सित इति सिद्धम् । तीर्ण-प्रतिज्ञस्य शस्त्रधारणे कारणमाह वृषलापेक्षयेति । प्रकृतनन्दस्य शूद्रा-यामूढ़ायां भार्य्यायां जातत्वेन 'शूद्रवत् वर्णसङ्कराः' इत्युक्तेः शूद्रजाते-श्चन्द्रगुप्तस्यापेक्षया अनुरोधेन तत्प्रतिपक्षसम्मूलनापेक्षयेति यावत् ।

(३) येन मयेति गद्यस्थं पदद्वयं पद्यस्थेषु समुत्खाताः इति, कृता इति, विभक्तमिति च क्रियापदेषु अन्वेति ।

समुत्खाता नन्दा नव हृदयरोगा इव भुवः
कृता मौर्य्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च (१) ॥

अथ वा, अगृहीते(२) राक्षसे, किमुत्खातं नन्दवंशस्य, किं वा स्थैर्य्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः । विचिन्त्य । अहो, राक्षसस्य नन्दवंशे निरतिशयो(३) भक्तिगुणः ; स खलु, कस्मिंश्चिदपि जीवति नन्दान्वयावयवे, वृषलस्य साचिव्यं ग्राहयितुं न शक्यते । अतः तदभियोगं प्रति, निरुद्योगैरस्माभिरव-

---

(१) येन मया, भुवः पृथिव्याः हृदयरोगा इव स्थिताः अत्यन्तं प्रकृतिरञ्जकत्वेन पृथिव्याः रञ्जकत्वोपचारः । नव योगानन्दस्तत्पुत्राश्चाष्टौ इति नवसंख्याता नन्दाः समुत्खाताः समूलमुच्छेदिताः न तु पलायनेन वनादौ प्रवेशिता इति यावत् । लक्ष्मीः राज्यलक्ष्मीः सरसि नलिनीव स्थिरपदा चिरस्थायिनी मौर्य्ये चन्द्रगुप्ते कृता । अभियुक्तेन अभिनिविष्टेन आग्रहवतेत्यर्थः मनसा द्वयोः कोपप्रीत्योः क्रोधानुरागयोस्तुल्यमनुरूपं सारं प्रधानं द्वितयं द्विविधं निग्रहानुग्रहहेतुकमपकारोपकाररूपं फलं द्विषति शत्रौ योगानन्दे, सुहृदि शरणागततया कृत्रिमे मित्रे चन्द्रगुप्ते च विभक्तं यथायोगमर्पितम् ।

(२) अगृहीते अनिगृहीते चन्द्रगुप्तसाचिव्यमग्राहिते वा । किमुत्खातमित्यनेन राक्षसस्य बुद्धिमाहात्म्यात् पुनरन्यो नन्दवंशः समुत्पात्स्यते इति ध्वन्यते । तत्प्रत्युत्थाने च चन्द्रगुप्तलक्ष्म्या न स्थिरतेति सर्व्वानर्थमूलं राक्षस एव नन्दामात्यः निग्राह्यः इति भावः ।

(३) निरतिशयः नास्ति अतिशयो यस्मात् अत्यन्तातिशययुक्तः ।

स्थातुमयुक्तमित्यनयैव बुद्ध्या, तपोवनगतोऽपि (१) घातित-स्तपस्वी नन्दवंशीयः सर्व्वार्थसिद्धिः, यावदसौ (२) मलय-केतुमङ्गीकृत्यास्मदुच्छेदाय विपुलतरं [प्रयत्न]मुपदर्शयत्येव। प्रत्यक्षवदाकाशे (३) लक्ष्यं बद्धा। साधु अमात्य! राक्षस! साधु, मन्त्रिबृहस्पते(४)! साधु, कुतः

ऐश्वर्य्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते,
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।

---

(१) तपोवनगतः वानप्रस्थाश्रमगतः तदाश्रमगतत्वेन राज्याभि-लाषविरहं सूचयति अतएव तपस्वी अनपराधी तथापि घातितः। हन्ते-र्णिजन्तात् कर्म्मणि क्तः। प्रणिधिः प्रयोज्यकर्त्ता। मत्प्रणिधिना घातित इत्यर्थः।

(२) तद्बधे दोषं दर्शयति यावदिति। असौ सर्व्वार्थसिद्धिः स्वयं राज्याभिलाषशून्योऽपि मलयकेतुमङ्गीकृत्य स्वराज्ये राजा भवत्विति प्रधानप्रकृतित्वेनाभ्युपगम्य प्रयत्नं चेष्टाम् [प्रपञ्चम्]। इति पाठे युद्धायो-द्योगम्। उपदर्शयति उपदर्शयिष्यत्येव यावच्छब्दयोगे भव्ये लट्।

(३) "स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदु"रिति हर्य्युक्तेः राक्षसस्य विप्रकृष्टस्य संबोधनानौचित्यात् तत्संबोधनसमर्थनाय कवि-राह प्रत्यक्षवदित्यादि। अप्रत्यक्षमपि राक्षसरूपं लक्ष्यं संबोध्यम् आकाशे प्रत्यक्षवत् प्रत्यक्षेण तुल्यं बद्धा बुद्धिस्थत्वेन आकाशे स्थितमिति कृत्वेत्यर्थः।

(४) मन्त्री बृहस्पतिरिव सूक्ष्मार्थदर्शित्वात् उपमितसमासः मन्त्रिणां बृहस्पतिरिव शिक्षकत्वात् इति वा तत्संबुद्धिः। साधु इत्यव्ययम्, अध्याहर्त्तव्यकरणक्रियाविशेषणं वा भवत्कृतं यद्यत् तत् सर्व्वं साधु।

भर्त्तुर्ये प्रलयेऽपि पूर्व्वसुकृतासङ्गेन, निःसङ्गया
भक्त्या, कार्य्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः (१)॥
अतएवास्माकं त्वत्संग्रहे प्रयत्नः, कथमसौ वृषलस्य साचिव्य-
ग्रहणेण सानुग्रहः स्यादिति । कुतः
अप्राज्ञेन च, कातरेण च, गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्, किं भक्तिहीनात् फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः, कलत्रमितरे, सम्पत्सु चापत्सु च (२) ॥

---

(१) अयं प्रत्यक्षदृश्यो भूमिस्थः लोकः ऐश्वर्य्यादनपेतम् ऐश्वर्य्य-युक्तमीश्वरं प्रभुम् अर्थतः अर्थाय स्वामीष्टफलाय साव्वविभक्तिकस्तसिल् । सेवते । ये जना विपत्तिषु विपत्कालेषु शत्रुपराभवदुर्भिक्षादिकालेषु तमीश्वरमनुगच्छन्ति अनुकुर्व्वन्ति तद्विपत्त्या आत्मानं विपन्नमिव मन्यन्ते तदुद्धाराय प्रयत्नादिना अनुसरन्ति वा ते जनाः तत्प्रतिष्ठाशया तस्यैव अनुगम्यमानस्य प्रतिष्ठा पुनरुत्थानं संपद्रूपा वा तत्र या आशा वाञ्छा तत्प्रतिष्ठाने पुनः स्वार्थसिद्धिः स्यादितीच्छा तयैवानुगच्छन्तीत्यनुषङ्गः । अथ वा ते प्रतिष्ठाशया यशोवाञ्छयैव तत् अनुगच्छन्तीति पूर्व्व-वाक्यस्थं क्रियापदं बुद्धिस्थतया तत्पदेन परामृश्यते । ये पुनः भर्तुः स्वामिनः प्रलयेऽपि मरणेऽपि पूर्व्वसुकृतासङ्गेन पूर्व्वं यत् सुकृतं भर्त्रा कृतोपकारादि तत्र आसङ्गेन तदायत्ततया निःसङ्गया निर्लोभया स्वार्थसम्पादनेच्छाविधुरया भक्त्या कार्य्यधुरां स्वामिना नियुक्तकर्म्मणि भारं चिन्तां वहन्ति कुर्व्वन्ति ते पुनर्दुर्लभा दुष्प्रापास्त्वादृशा भवद्विधा एव नान्ये ।

(२) सानुरागेण अनुरागवता अप्राज्ञेन अबुद्धिमता कातरेण

तन्मयाप्यस्मिन्वस्तुनि न शयानेन(१) स्थीयते यथाशक्ति क्रियते तद्ग्रहणं(२) प्रति यत्नः । कथमिति । अत्र तावद्वृषलपर्व्वतकयोरन्यतरविनाशेनापि, चाणक्यस्यापकृतं भवतीति, विषकन्यया राक्षसेनास्माकमत्यन्तोपकारी, मित्रं घातितस्तपस्वी पर्व्वतेश्वर, इति सञ्चारितो जगति जनापवादः लोकप्रत्ययार्थमस्यैवार्थस्याभिव्यक्तये (३) । पिता ते चाणक्येन घातित इति

---

विक्रमशून्येन वा भृत्येन नृपतेः को गुणः फलं स्यात् । तथा प्रज्ञाविक्रमवतोऽपि भक्तिहीनात् आराध्यविषये प्रीतिर्भक्तिस्तया हीनात् भृत्यात् किं फलम् । येषां भृत्यानां प्रज्ञादिकाः समुदिताः समस्ता न तु व्यस्ता-गुणास्तत्र फलाभावस्योक्तत्वात् । ते भृत्याः नृपतेः सम्पत्सु विभूतिकालेषु, आपत्सु विपत्कालेषु च भूतये उत्तरोत्तरवृद्धिलाभाय, विपत्तारणाय च भवन्ति इतरे प्रज्ञादिशून्याः, नृपतेः कलत्रम् ऐश्वर्य्यलाभकामनयैव सेवनात् वनितेव 'न वै पत्युः कामाय प्रिया भवति आत्मनस्तु कामाये'ति श्रुतेः स्त्रीणां स्वकामायैव पतिसेवनं प्रसिद्धं तत्सादृश्याच्च तेऽपि कलत्रं न तु यथार्थभृत्या इति भावः ।

(१) शयानेन निरुद्योगतया शयानतुल्येन अप्रयतमानेनेत्यर्थः ।

(२) तस्य राक्षसस्य ग्रहणं निग्रहणं चन्द्रगुप्तसाचिव्यार्थं ग्रहणं वा ।

(३) अत्यन्तोपकारिणो मित्रस्य स्वेन मया हननासम्भवात् मदुपकारिमित्रस्य हनने च चन्द्रगुप्तसहायहीनताकरणसम्भवेन राक्षसेनैव घातित इत्येवं लोकप्रत्ययार्थं सर्व्वलोकविश्वासार्थम् अस्यैव पर्व्वतकबधरूपस्यार्थस्य अभिव्यक्तये केन कृतमिति प्रकाशनाय, राक्षसेनैव न तु मया, मत्प्रणिधिनापि राक्षसप्रणिधित्वेन प्रत्यायितया विषकन्यया यत्सम्भोगात् सम्भोगोत्तरक्षणमेव नाशस्तादृशाशुभलक्षणवत्या कन्यया

रहसि त्रासयित्वा, भागुरायणेनापवाहितः पर्व्वतकपुत्त्रो मलयकेतुः(१)। शक्यः खल्वेष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुम्(२)। न पुनरस्य निग्रहात् पर्व्वतकवधोत्पन्नमयशः प्रकाशीभवत्प्रमार्ष्टुमलमिति (३)। अन्यच्च

---

घातित इति राक्षसस्य जनापवादः जनेषु अपवादः निन्दा सञ्चारितः प्रचारितः। राक्षसस्य तद्घातने प्रयोजनोद्भावनार्थं तस्य विशेषणम् अत्यन्तोपकारीति अस्माकमित्यादि। तथोपकारत्वेन कृत्रिममित्रमित्यर्थः। तस्य हनने राक्षसस्य अभिप्रायं दर्शयति चाणक्यस्यापकृतमिति वृषलपर्व्वतयोरुभयोरपि चाणक्यमित्रत्वेन एकतरविनाशेऽपि सहायहीनतया अन्यतरस्य विनाशः सुकर इति चाणक्यगृहीतपक्षोच्छेदो भविष्यतीत्याशयेनैव तद्धननमित्यर्थः। अनेन तत्कर्त्तृकहननयोग्यत्वं सम्भावितम्। विषकन्ययेति प्रयोज्यकर्त्तरि तृतीया घातित इति हन्तेर्ण्यन्तात् क्तः।

(१) एवमपवादेऽपि अस्यार्थस्यायथार्थतया राक्षसेन पर्व्वतकपुत्त्रं मलयकेतुं प्रति यथार्थस्य मत्कृतहननस्य कथनेन त्रासः समुत्पादित इत्याह पिता ते इत्यादि। चाणक्येनैव न तु मया इति रहसि त्रासयित्वा अत्यन्तमित्रस्य भवत्पितुस्तेन हननात् भवतोऽपि ततो नाशः भविष्यतीति त्रस्तं कृत्वा अपवाहितः अपसारितः।

(२) व्युत्तिष्ठमानः युद्धार्थं कृतसन्नहनतया उद्यच्छमानः राक्षसमतिपरिगृहीतः राक्षसमतिः परिगृहीता येन निष्ठान्तस्य परनिपातः। निवारयितुं खलु निश्चितं शक्य इत्यर्थः।

(३) मलयकेतुवधे मित्रपुत्त्रवधदृष्ट्या पर्व्वतकोऽपि चाणक्येनैव हतोऽनेन राक्षसेन इति लोके यदयशः प्रकाशीभविष्यति तदयशः प्रमार्ष्टुं नालं न समर्थः।

नियुक्ताश्च मया स्वपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया (१) बहुविधदेशभाषावेशाचारसञ्चारवेदिनो नानाव्यञ्जनाः (२) प्रणिधयः। अन्विष्यन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां निपुणतरं प्रचारगतयः (३)। तत्तत्कारणमुत्पाद्य (४) कृतकृत्यतामापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। शत्रुप्रयुक्तानाञ्च तीक्ष्णरसदायिनां प्रतिविधानं(५) प्रत्यप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्नाः नियुक्तास्तत्राप्तपुरुषाः। अस्ति चास्माकं सहाध्यायि मित्रं विष्णुशर्म्मा नाम ब्राह्मणः, स च औशनस्यदण्डनीतौ, (६)

---

(१) अनुरक्ताश्च अनुरागवन्तः अपरक्ता विरक्ताः विरागवन्तश्च ये जनाः ; तेषां जिज्ञासयया प्रकृतिषु मध्ये के के जना अस्मत्पक्षेऽनुरक्ता के वा विरक्ता के वा पक्षान्तरे तथाविधा इति ज्ञानेच्छया।

(२) नानाव्यञ्जनाः बहुविधचिह्ना बहुविधवेशधारिणः।

(३) प्रचारः क्रियासु प्रवृत्तिः गतयस्तत्साधनानि, प्रचारश्च गतयश्च निपुणतरं सूक्ष्मानुसन्धानेन अन्विष्यन्ते अनुसन्धाय निश्चीयन्ते मया चरेणेत्यादि।

(४) चन्द्रगुप्तेन सह उत्थायिनः उत्तिष्ठमानाः तत्प्रतिपक्षाश्रयेणाभियोगमातन्वाना इत्यर्थः तत्तत्कारणमुपादानम् उपाधिं वा उत्पाद्य कृतकृत्यतां प्रधानपदादिदानेन सुस्थिरत्वमापादिताः यतः कृतकृत्याः अतो न तेऽपि अस्मासु विरक्ताः स्युः। तेषां विशेषपदाद्यलाभे अपरक्ताः सन्तस्ते चन्द्रगुप्तोच्छेदाय प्रत्युपतिष्ठेरन् इति विपक्षे विपरीतफलमिति।

(५) प्रतिविधानं निवारणं प्रति अप्रमादिनः सावधानाः आप्तपुरुषाः विश्वस्तजनाः क्षितिपतिप्रत्यासन्नाः राजनिकटस्थाः।

(६) उसनसा शुक्रेण प्रोक्तायां दण्डनीतौ दण्डप्रणयनशास्त्रे।

चतुःषष्ठ्यङ्गे ज्योतिःशास्त्रे च, परं प्रावीण्यमुपगतः । स च मया क्षपणकलिङ्गधारी, नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय, सर्व्वनन्दामात्यैः सह सख्यं ग्राहितो, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यति । तदेवमस्मत्तो न किञ्चित् परिहास्यते(१) । वृषल एव केवलं प्रधानप्रकृतिरस्मास्वारोपितराज्यतन्त्रभारः सततमुदास्ते । अथ वा यत् स्वयमभियोग(२) दुःखैरसाधारणैरपाकृतं, तदेव राज्यं सुखयति । कुतः

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।
गजेन्द्राश्च, नरेन्द्राश्च, प्रायः सीदन्ति दुःखिताः (३) ॥

ततः (४) प्रविशति सह यमपटेन (५) चरः ।

पणमह जमस्स चलणे, किं कज्जं देवेहिं अण्णेहिं ।
एसो क्खु अण्णभत्ताणं हरइ जीअं धड़फड़न्तं (६) ॥

---

(१) अस्मत्तो न किञ्चित् परिहास्यते हीनं न भविष्यति कार्य्यविकलतारूपा न्यूनता न भविष्यतीत्यर्थः ।

(२) स्वयमभियोगः युद्धार्थोपायचिन्तनेऽभिनिवेशस्तेन दुःखैः अपाकृतं वर्ज्जितं राज्यं तत् सुखायैव ।

(३) स्वयमाहरणपूर्व्वकभोगे दुःखावश्यम्भाव इत्यत्र दृष्टान्तमाह स्वयमित्यादि सिंहाः भूपाश्च बलिनोऽपि यतः स्वयमाहारिणः अतो दुःखिताः सन्तः प्रायः सीदन्ति अत्यन्तकार्य्याकुलतयावसन्ना भवन्ति ।

(४) असूचितस्य प्रवेशनिषेधात् नियुक्ताश्च प्रणिधय इत्यनेनोपक्षिप्तस्य प्रणिधेः सूचनात् तस्य प्रवेशमाह तत इति सूचनानन्तरम् ।

(५) यमस्य पट इव । शुभाशुभकर्म्मसूचकत्वात् तत्पटेन सादृश्यम् लोकानां शुभाशुभकर्म्मसूचकपटदर्शनेन हि आजीविका भिक्षुकस्य ।

(६) प्रणमत यमस्य चरणौ, किं कार्य्यं देवैरन्यैः ।
एष खल्वन्यभक्तानां हरति जीवितं परिस्फुरन्तम् ॥ स०

अपि च ।

पुरिसस्स जीविदव्वं बिसमादो होइ भत्तिगहिआदो ।
मारेइ सब्बलोअं जो, तेण जमेण जीआमो(१) ॥

ता एदं गेहं पबिसिअ, जमपडुअं दंसअंतो गाएमि (२) ।

इति परिक्रामति ।

शिष्यः । विलोक्य । भद्र ! न प्रवेष्टव्यम् ।

चरः । हंहो बम्ह(ह्म)णा ! कस्स एदं गेहं ? (३) ॥

शिष्यः । अस्माकमुपाध्यायस्य सुगृहीतनाम्न (४) आर्य्य चाणक्यस्य ।

चरः । विहस्य । हंहो बम्ह(ह्म)णा ! अत्तणोज्जेव केरअस्स एदं धम्मभादुअस्स घरं होदि, ता देहि मे पवेसं, जाव दे उवज्झाअस्स धम्मं उवदिसामि (५) ।

---

अपिच । (१) पुरुषस्य जीवितव्यं विषमादपि भवति भक्तिगृहीतात् ।
मारयति सर्वलोकं यस्तेन यमेन जीवामः ॥ स०

भक्त्या यमभक्त्या गृहीतात् नियमितात् निवारितादित्यर्थः । विषमात् सङ्कटादपि निःशेषमरणकारणात् तस्मादप्येत्यर्थः ल्यब्लोपे पञ्चमी । पुरुषस्य जीवितव्यम् जीवनं भवति ।

(२) तस्मादिदं गृहं प्रविश्य, यमपटं दर्शयन् गायामि । स०

(३) अहो ब्राह्मण ! कस्येदं गृहम् ? स०

(४) स सुगृहीतनामा स्यात् यः प्रातः स्मर्य्यते जनैरित्युक्तेः प्रातःस्मरणीयनामकस्य ।

(५) अहो ब्राह्मण ! आत्मीयस्यैव एतत् धर्म्मभ्रातुर्गृहम्, तस्माद्देहि मे प्रवेशं यावत् तवोपाध्यायस्य धर्म्ममुपदिशामि । स० धर्म्मभ्रातुरेकगुरुकस्य ।

शिष्यः । सक्रोधम् । धिक् मूर्ख ! किं भवानस्मदुपाध्याया-दपि धर्म्मवित्तमः ।

चरः । हंहो बम्म(ह्म)णा ! मा कुप्प ; णहि क्खु सव्वो सव्वं जाणादि ; ता किम्पि ते उवज्झाओ जाणादि, किम्पि अम्मा(ह्मा)रिसा जाणन्ति (१) ।

शिष्यः । सक्रोधम् । मूर्ख ! सर्व्वज्ञतामुपाध्यायस्य [चोरयितुमिच्छसि] [चोरयसि] ।

चरः । हंहो बम्म(ह्म)णा ! जइ दे उवज्झाओ सव्वं जाणादि, जाणादु दाव कस्स चन्दो अणभिमदो त्ति (२) ।

शिष्यः । मूर्ख ! किमनेन ज्ञातेन गुरोर्भविष्यति ?

चरः । हंहो बम्म(ह्म)णा ! तुह उवज्झाओ ज्जेव जाणिस्सदि जं इमिणा जाणिदेण भोदि, उजूअबुद्धिआ तुमं दाव इत्तिअं जाणासि, कमलाणं चन्दो अणभिमदो त्ति । णं पेक्ख,

कमलाणं मणोहराणं वि रूआदो विसंवअइ शीलं ।
संपुण्णमंडलम्मि जाइं चन्दे विरुद्धाइं (३) ।

---

(१) अहो ब्राह्मण ! मा कुप्य ; न हि खलु सर्वः सर्व्वं जानाति ; तत्किञ्चित्ते उपाध्यायो जानाति, किञ्चित् अस्मादृशा अपि जानन्ति । स०

(२) अहो ब्राह्मण ! यदि तवोपाध्यायः सर्व्वं जानाति, जानातु तावत् कस्य चन्द्रोऽनभिमत इति स० । चन्द्रगुप्तः कस्यानभिमत इति श्लिष्टोऽर्थः ।

(३) अहो ब्राह्मण ! तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेन भवति, ऋजुबुद्धिस्त्वं तावदेतावत् जानासि, कमलानां चन्द्रोऽनभिमत इति स० । ननु पश्य,

चाण। आत्मगतम्। अये, चन्द्रगुप्तादपरक्तान् पुरुषान् जानामीत्युपक्षिप्तमनेन।

शिष्यः। मूर्ख! किमिदमसंबद्ध(१)मेवमभिधीयते।

चरः। हंहो बम्ह(ह्म)णा! सुसंबद्धं ज्जेव्व एदं भवे (२)।

शिष्यः। यदि किं स्यात्।

चरः। जइ [सुणन्तं जाणन्तं अ] जणं लहे (३)।

चाण। विलोक्य। भद्र! सुखं प्रविश, लप्स्यसे [श्रोतारं ज्ञातारञ्च]। [श्रोतुं जानन्तम्]

---

कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम्।

सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि। स०

मनोज्ञरूपाणामपि पद्मानां रूपादाकारात् शीलं चरितं विसंवदति असदृशमनुचितं च भवति यस्य यथा रूपं तस्य तथैव शीलं भवितुमुचितं 'यत्राकृतिस्तत्र गुणा वसन्ती'त्युक्तेः तेषान्तु तथाभावात् अनुचितशीलत्वमिति भावः। अनुचितमेव दर्शयति सम्पूर्णेत्यादि। सम्पूर्णमण्डले इत्यनेन विरागकारणाभाव उक्तः। चन्द्रे चन्द्रविषये तमधिकृत्येत्यर्थः। यानि विरुद्धानि तदुदये निमीलनं, तस्मिन् विरागः, तत्कान्तेरसहनमित्यादीनि विरुद्धानि तानि अनुचितशीलमित्यर्थः। एतेन चन्द्रगुप्तस्य पूर्णमण्डलत्वेऽपि तस्मिन् प्रकृतेर्विरागः अनुचित एव इत्यपि ध्वन्यते।

(१) असंबद्धं असङ्गतम् अनपेक्षितार्थकमित्यर्थः।

(२) अहो ब्राह्मण! सुसम्बद्धमेवैतत् भवेत् स०। सङ्गतार्थमित्यर्थः।

(३) यदि शृण्वन्तं जानन्तञ्च जनं लभे। स०। [सुणितुं जाणन्तं] इति पाठे श्रोतुं जानन्तम्। स०

चरः । एसो पविसामि । प्रविश्योपसृत्य । जेदु, जेदु, अज्जो (१) ।

चाण । विलोक्यात्मगतम् । कथं प्रभूतत्वात् कार्य्याणां, कस्य परिज्ञाने नियुक्तो निपुणक इति न ज्ञायते । आः ज्ञातम्, अये कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः । प्रकाशम् । भद्र ! स्वागतमुपविश्यताम् ।

चरः । जं अज्जो आणवेदि त्ति (२) । भूमावुपविशति ।

चाण । भद्र ! उपवर्णयेदानीं स्वनियोगवृत्तान्तम् । अपि वृषलमनुरक्ताः प्रकृतयः ?

चरः । अध इं ? अज्जेण क्खु तेसु तेसु विराअकारणेसु परिहरितेसु सुगहीदनामधेए देए चन्दउत्ते दिढ़ं अणुरत्ताओ पइदिओ । किं उण सन्ति एत्थ णअरे अमच्चरक्खसेण सह पढ़मं समुपणसिणेहबहुमाणा तिण्णि पुरिसा, जे देअस्स चन्दसिरिणो सिरिं ण सहन्ति (३) ।

चाण । सक्रोधम् । ननु वक्तव्यं स्वजीवितं न सहन्त इति, भद्र ! अपि ज्ञायन्ते नामधेयतः ?

---

(१) एष प्रविशामि । जयतु, जयतु, आर्य्यः । स०

(२) यद्देव आज्ञापयतीति । स०

(३) अथ किम् ? आर्य्येण खलु तेषु तेषु विरागकारणेषु परिपरिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढ़मनुरक्ताः प्रकृतयः किं पुनः सन्त्यत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते । स०

चरः । कधं अस्सुणिदणामधेया अज्जस्स णिवेदीअन्ति(१) ।

चाण । तेन हि श्रोतुमिच्छामि ।

चरः । सुणादु अज्जो ; पढ़मं दाब अज्जस्स रिपुवक्खे बद्धपक्खवादो खवणाओ (२) ।

चाण । सहर्षमात्मगतम् । अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः । प्रकाशम् । किंनामधेयो हि सः ?

चरः । जीवसिद्धी णाम ।

चाण । अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथमवगतं भवता ?

चरः । जेण सा अमच्चरक्खसेण पउत्ता विसकण्णआ देवे पव्वदेस्सरे समावेसिदा (३) ।

चाण । स्वगतम् । जीवसिद्धिरेष तावदस्मत्प्रणिधिः । प्रकाशम् । भद्र ! अथापरः कः ?

चरः । अज्ज अबरो क्खु अमच्चरक्खसस्स पिअबअस्सो काअत्थो सअड़दासो णाम (४) ।

चाण । विहस्यात्मगतम् । कायस्थ इति लघ्वी मात्रा । तथापि न युक्तं प्राकृतमपि रिपुमवज्ञातुम् । तस्मिन्मया

---

(१) कथमश्रुतनामधेया आर्य्यस्य निवेद्यन्ते । स०

(२) शृणोत्वार्य्यः ; प्रथमं तावद्रिपुपक्षे बद्धपक्षपातः क्षपणकः । स०

(३) येन सा अमात्यराक्षसप्रयुक्ता विषकन्या देवे पर्व्वतेश्वरे समावेशिता स० ।

(४) आर्य्य ! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम । स०

सुहृच्छद्मना सिद्धार्थको निक्षिप्तः। प्रकाशम्। भद्र, तृतीयं श्रोतुमिच्छामि।

चरः। विहस्य। तइओ वि अमच्चरक्खसस्स दुदीअं विअ हिअअं, पुप्फउरवासी, मणिआरसेट्ठी चन्दणदासो णाम, जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो (१)।

चाण। आत्मगतम्। नूनं सुहृत्तमः न ह्यनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति। प्रकाशम्। भद्र, चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता?।

चरः। अज्ज! इअं अंगुलीअमुद्दा [अज्जं अवगमइस्सदि] [अज्जं अवगदत्थं करिस्सदि] (२)। इति मुद्रामर्पयति।

चाण। मुद्रामवलोक्य गृहीत्वा, वाचयति नाम राक्षसस्य। सहर्षं स्वगतम्। ननु राक्षस एवास्मदङ्गुलिप्रणयी संवृत्त इति। प्रकाशम्। भद्र, अङ्गुलिमुद्राधिगमं प्रकाशेन श्रोतुमिच्छामि।

चरः। सुणादु अज्जो! अत्थि दाव अहं अज्जेण पउरजणचरितदंसणे णिउत्तो, तदो परघरप्पवेसे परस्स अणासंकणीयेण, इमिणा जमपडेण हिंडन्तो, मणिआरसेट्ठिणो

---

(१) तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं, पुष्पपुरनिवासी, मणिकारश्रेष्ठी, चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः। स०

(२) आर्य! इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति। [अज्जं अवगमइस्सदि] इति पाठे आर्यमवगमयिष्यति। स०

चन्दणदासस्स घरं पविट्ठोह्मि ; तहिं जमपडअं पसारिअ, पउत्तोह्मि गीदाइं गाइदुं (१) ।

चाण । ततस्ततः ?

चरः । तदो, एक्कादो आवरकादो, पञ्चवरिसदेसीओ-प्पिअदंसणीअसरीराकिदी कुमारओ, बालजणसुलहकोदुहलोप्फुल्लणअणजुअलओ णिक्कमिदुं पउत्तो ; तदो, हा णिग्गदो, हा णिग्गदोत्ति, [संकापरिग्गहब्भरगरुओ], तस्स ज्जेव्व आवरकस्स अब्भंतरे, उट्ठिदो महंतो कलअलो । तदो इसि दुआरदेसदाविदमुहीए एक्काए इत्थिआए, सो कुमारओ णिक्कमन्तोज्जेव्व णिब्भच्छिअ अवलम्बिदो कोमलाए बाहुलदाए ; तस्साअ कुमारसंरोहसंभमप्पचलिदंगुलिदो करादो पुरिसंगुलिपरिणाहप्पमाणघडिआ बिअलिदा इअं अङ्गुलीमुद्दिआ देहलीबन्धम्मि णिपडिआ ; ताए इत्थिआए अणवबुद्धन्तज्जेव, मम चलणपासं समागच्छिअ, पणामणिहुआ णववहुव्व णिच्चला संवुत्ता ; मए वि अमच्चरक्खसस्स णामंकिदेत्ति अज्जस्स पादमूलं पाविदा, ता एसो इमाए मुद्दाए आगमो त्ति (२) ।

---

(१) प्रणीत्वार्य्य: ; अस्ति तावदहमार्य्येण पौरजनचरित्रदर्शने नियुक्तः, ततःपरगृहप्रवेशे परस्यानाशङ्कनीयेन अनेन यमपटेन आहिण्डमानो, मणिकारश्रेष्ठिचन्दनदासस्य गृहं प्रविष्टोऽस्मि ; तत्र यमपटं प्रसार्य्य प्रवृत्तोऽस्मि गीतानि गातुम् । आहिण्डमानः बम्भ्रम्यमाणः ।

(२) ततश्च एकस्मादावरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारो, बालजनसुलभकौतुकोत्फुल्लनयनयुगलो निष्क्रमितुं

चाण। भद्र! श्रुतं; अपसर नचिरादस्य परिश्रमस्यानुरूपं फलमधिगमिष्यसि।

चरः। जं अज्जो आणवेदि त्ति (१)। निष्क्रान्तः।

चाण। शार्ङ्गरव! शार्ङ्गरव!

प्रविश्य। शिष्यः। उपाध्याय! आज्ञापय!

चाण। वत्स! मसी [भाजनं] [पात्रं] पत्रञ्चोपानय।

शिष्यः। यदाज्ञापयत्युपाध्यायः। इति निष्क्राम्य पुनः प्रविश्य। उपाध्याय! इदं मसी[भाजनं] [पात्रं] पत्रञ्च!

चाण। गृहीत्वा स्वगतम्। किमत्राभिलिखामि। अनेन खलु लेखेन राक्षसो जेतव्यः।

---

प्रवृत्तः; ततो, हा निर्गतो, हा निर्गत इति, [सङ्कापड़िग्गहं णिवेदन्त इति पाठे शङ्कापरिग्रहं निवेदयन् इति स०]। शङ्कापरिग्रहनिभृतगृहकस्यैवावरकस्याभ्यन्तरे, स्त्रीजनस्योत्थितो महान् कलकलः। तत ईषद्द्वारदेशदापित (दत्त) मुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भत्स्यावलम्बितः कोमलया बाहुलतया। तस्याश्च कुमारसंरोधसंभ्रमप्रचलिताङ्गुलेः करात्पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे निपतिता; तया च स्त्रिया अनवबुध्यमानैव, मम चरणपार्श्वं समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता; मयापि अमात्यराक्षसस्य नामाङ्कितेति आर्य्यस्य पादमूलं प्रापिता, तस्मादेषोऽस्या मुद्राया आगम इति स०। पुरुषस्याङ्गुलेः परिणाहेन ततुल्यविस्तारेण वटिता रचिता पुरुषाङ्गुलितुल्यविस्तारतया रचिता तेन ततः कृशाङ्गुलेः स्त्रीकरात् गलनसम्भव इति भावः।

(१) यदार्य्य! आज्ञापयति। स०

प्रविश्य। प्रतीहारी। जेदु, जेदु, अज्जो (१)।

चाण। सहर्ष(२)मात्मगतम्। गृहीतोऽयं जयशब्दः। प्रकाशम्। शोणोत्तरे! किमागमनप्रयोजनम्।

प्रती। अज्ज! कमलमुउलाआरमञ्जलिं सीसे णिवेसिअ देवो चन्दसिरी अज्जं विण्णवेदि। इच्छामि अहं, अज्जेण अब्भणुण्णादो, देअस्स पव्वदेसरस्स पारलोइअं काडुं, तेण अ धारिदपुव्वाइं आभरणाइं गुणवन्ताणं वह्म(म्ह)णाणं पड़िवादेमित्ति (३)।

चाण। सहर्षमात्मगतम्। साधु, वृषल! साधु ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि। प्रकाशम्। शोणोत्तरे! उच्यतामस्मद्वचनाद्वृषलः, साधु, वत्स! साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां, तदनुष्ठीयतामात्मनोऽभिप्रायः; किन्तु पर्व्वतेश्वरधृतपूर्व्वाणि भूषणानि गुणवन्ति (४) गुणवद्भ्यएव

---

(१) जयतु, जयत्वार्यः। स०

(२) लिख्यपत्रद्वारा मलयकेतुतो राक्षसस्य भेदद्वारा जयो भावीति चाणक्यचिन्ताकाले प्रतीहार्य्या जयशब्दस्योच्चारणात् आत्मनो जयलाभोऽवश्यं भावीति चाणक्यस्य हर्षः।

(३) आर्य्य! कमलमुकुलाकारमञ्जलिं शीर्षे निवेश्य देवश्चन्द्रश्रीरार्य्यं विज्ञापयति। इच्छाम्यहमार्य्येणाभ्यनुज्ञातो, देवस्य पर्व्वतेश्वरस्य पारलौकिकं कर्त्तुम्, तेन च धारितपूर्व्वाणि आभरणानि गुणवतां ब्राह्मणानां प्रतिपादयामीति स०। तेन पर्व्वतेश्वरेण।

(४) गुणवन्ति बहुमूल्यत्वसुदृश्यत्वादिगुणयुक्तानि अतएव गुणवद्भ्य एव देयानि सद्भिरेव योगस्योचितत्वादिति सूचयता चाणक्येन, आत्मभृतेन स्वप्रणिधिभूतेन विश्वावसुप्रभृतिभ्रातृत्रयेण तदलङ्करणं चन्द्र-

ब्राह्मणेभ्यः प्रतिपादनीयानि, तदेषोऽहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामि (१)।

प्रति। जं अज्जो आणवेदि त्ति (२)। निष्क्रान्ता।

चाण। शार्ङ्गरव! शार्ङ्गरव! उच्यतामस्मद्वचनाद्विश्वावसुप्रभृतयस्त्रयो भ्रातरः, यथा वृषलात्प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्यः (३) इति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। निष्क्रान्तः।

चाण। स्वगतम्। उत्तरोऽयं(४) लेखार्थः पूर्व्वः (५) कतमो-

---

गुप्तहस्तगतमपि प्रतिग्रहच्छलेनानीय राक्षसस्य समीपे वणिग्द्वारा प्रेषणीयमित्याशयेन प्रतिपादनीयानीत्युपदिष्टम्।

(१) प्रेषयामीति भविष्यत्सामीप्ये लट् अनुपदं प्रेषयिष्यामीत्यर्थः

(२) यत् आर्य्य आज्ञापयति।

(३) दानपात्राणि विश्वावसुप्रभृतीन् भ्रातॄन् प्रति, चन्द्रगुप्तात् पर्व्वतेश्वरधृतालङ्काराणां प्रतिग्रहानन्तरं स्वसकाशे आगमनमुपदिशता तदलङ्काराणां तेभ्यः कार्य्यान्तरार्थं ग्राह्यता सूचिता।

(४) अयमलङ्काररूपो लेखस्य पञ्चमाङ्के दर्शयिष्यमाणस्य "स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपीत्यादिकस्य" अर्थः प्रतिपाद्यः उत्तरः उत्तरावयवः तत्र लेखे शेषभागे अज्ञान् प्रति "अलङ्कारत्रयञ्च यत् सत्यवतानुप्रेषितं तदुपगतमिति" दर्शयिष्यमाणत्वात् तद्भागस्यालङ्कारविषयकत्वमित्यग्रे स्पष्टीभविष्यति। तथा च एतदलङ्कारं पात्रद्वारा चन्द्रगुप्तात् प्रतिग्राह्य वणिग्द्वारा राक्षससमीपे विक्रीय मलयकेतोः राक्षसभेदार्थं कल्पनानस्य लेखस्य सुसंवादिता स्यादित्याशयः। एतेन राक्षसमुद्राङ्कितपत्रपाठेन मलयकेतोः राक्षसाद्भेदो भविष्योत्याशयेन सुहृद्भेदरूप उपायोऽवलम्बित इति गम्यते।

(५) पूर्व्वः लेखस्य पूर्व्वावयवार्थः कतमः किं रूपकोऽस्य भवेदिति चिन्ता।

ऽस्तु । विचिन्त्य । आः ज्ञातः (१) उपलब्धवानस्मि प्रणिधिभ्यो, यथा तस्य म्लेच्छराजबलस्य मध्यात् प्रधानतमाः पञ्च राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते । तद्यथा ;

कौलूतश्चित्रवर्म्मा, मलयनरपतिः सिंहनादो नृसिंहः,
काश्मीरः पुष्कराक्षः, क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः ।
मेघाक्षः पञ्चमोऽस्मिन् पृथुतुरगबलःपारसीकाधिराजो,
नामान्येषां लिखामि ध्रुवमहमधुना, चित्रगुप्तः प्रमाष्टुं (२) ॥

विचिन्त्य । अथवा न लिखामि (३) ; सर्व्वमनभिव्यक्तमेव ताव-दास्ताम् । प्रकाशम् । शार्ङ्गरव ! शार्ङ्गरव !

---

(१) आ इति स्मरणे तत्सूचयन्नाह ज्ञात इति निश्चित इत्यर्थः लेखस्य पूर्व्वावयवार्थ इत्यनुकर्षणीयम् । किंरूपेण निश्चित इत्याशयेन पञ्चानां नृपाणां राक्षसानुरक्तत्वेन उपलब्धतया तानेव पूर्व्वावयवतया मलयकेतुतो भेदनार्थं लिखामीति लेखस्य पूर्व्वावयवार्थ इति निश्चित इति भावः ।

(२) तानेव दर्शयन् तेषु कर्त्तव्यदोषारोपणस्याशक्यसमुच्छेदतामाह कौलूत इत्यादि । कौलूतः कुलूतजनपदस्य राजा चित्रवर्म्मा नाम, ना सिंह इव असह्यविक्रमः मलयदेशपतिः सिंहनादो नाम, काश्मीरः कश्मीर-देशाधिपः पुष्कराक्षो नाम, क्षतरिपुमहिमा नाशितशत्रुवीर्य्यः सैन्धवः सिन्धुदेशाधिपः सिन्धुषेणो नाम, पृथुतुरगबलः अतिशयिताश्वसैन्यः पारसीकाधिराजस्तद्देशाधिपः मेघाक्षो नाम, एषां नामानि भेदकपत्रे दोषारोपणेन दुष्टतया लिखामि चित्रगुप्तः तत्प्रमाष्टुं शोधयतु सोऽपि तेषां दोषारोपणशोधनं कर्त्तुं न शक्नोति इत्यात्मगर्व्वप्रकाशः ।

(३) न लिखामि तेषां नामानि स्पष्टतया न लिखामि किन्तु पत्रे "स्वस्ति यथास्थाने इत्यादिके, आप्ततमात् सिद्धार्थकादि याशंशे लिखिष्य-माणे वाचिकसन्देशस्यापि सूचनात् तन्मुखेनैव तन्नामप्रकाशनमग्रे भविष्यतीत्याशयः ।

प्रविश्य शिष्यः । उपाध्याय ! आज्ञापय ।

चाण । वत्स ! श्रोत्रियाक्षराणि (१) प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति ; तदुच्यतामस्मद्वचनात् सिद्धार्थकः । कर्णे कथयित्वा(२) । एभिरक्षरैः(३) केनापि, किमपि, कस्यापि, स्वयं वाच्यमिति; अदत्तवाह्यनामानं(४)लेखं शकटदासेन लेखयित्वा, मामुपतिष्ठस्व; न चाख्येयमस्मै(५)चाणक्यो लेखयतीति।

---

(१) स्वयं लेख्यालेखने हेतुं दर्शयति श्रोत्रियाक्षराणीत्यादि एतेन शिष्यसमीपेऽपि छलेनायथार्थस्य प्रकाशनात् मन्त्रगुप्तिः कृतेति बोध्यम् ।

(२) कथयित्वा, पञ्चमाङ्के दर्शयिष्यमाणे "स्वस्ति यथास्थानं कुतोऽपि कोऽपीत्यादि पत्रे न्यस्यमानवाक्यमुक्त्वेत्यर्थः ।

(३) एभिरक्षरैः कर्णे अनुपदमुपदिष्टस्य "स्वस्ति यथास्थाने इत्यादि पत्रारूढ़वाक्यस्य व्यञ्जकैः अक्षरैरुपलक्षितं लेखमित्यन्वयः ।

(४) लेखं विशिनष्टि अदत्तवाह्यनामानमिति अलिखितशिरोभागस्थप्रतिपाद्यनामाक्षरमित्यर्थः शकटदासं प्रति किमुक्त्वा लेखनीयमित्यत्र कथनप्रकारमुपदिशति केनापीत्यादि केनापि जनेन कस्यापि प्रतिपाद्यस्य तमुद्दिश्येत्यर्थः किमपि लेख्यं तच स्वयं आत्मनाऽपि वाच्यं पठितुं योग्यमित्युक्त्वा लेखनीयम् । स्वयंवाच्यमिति विशेषणेन शिरोनामशून्यत्वहेतुर्दर्शितः सति हि शिरोनामलेखने तन्नामाङ्कितपुरुषेणैव तद्वाच्यं स्यात् न स्वयमिति पत्ररीतिनियमात् । तथाच स्वयं वाच्यतायोग्यतायै शिरोनामशून्यतया लेखनीयमिति भावः ।

(५) चाणक्यस्य इदं लेख्यमित्यवगमे सन्देहात् शकटदासेन न लेख्यं स्यादित्यत उक्तम् केनापि कस्यापीत्यादि तथापि चाणक्यस्य तत्प्रयोजकतयाऽगमेऽपि न लेखिष्यतीत्यत आह नचाख्येयमित्यादि।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। निष्क्रान्तः।

चाण। स्वगतम्। हन्त जितो मलयकेतुः।

प्रविश्य। लेखहस्तः सिद्धार्थकः। जअदु, जअदु, अज्जो; अज्ज अअं सो सअडदासेण सहत्थलिहिदो लेहो [मम वअणेण अविचालिअ] (१)।

चाण। गृहीत्वा निरीक्ष्य। अहो दर्शनीयताक्षराणाम्। इत्यनुवाच्य। भद्र! अनया (२) मुद्रया मुद्रयैनम्।

सिद्धा। जं अज्जो आणवेदि त्ति। तथा कृत्वा। अज्ज, अअं सो मुद्दिदो लेहो; ता आणवेदु अज्जो किं अवरं अणुचिट्ठीअदु त्ति (३)।

चाण। भद्र! कस्मिंश्चिदात्मनानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि।

सिद्धा। सहर्षम्। अज्ज! अणुग्गहिदोह्मि; ता आणवेदु अज्जो, किं इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वं (४)।

---

(१) जयतु जयत्वार्य्यः। आर्य्य! अयं सः शकटदासेन स्वहस्तलिखितो लेखः स०। [मम वअणेण अविचालिअ] इत्यधिकपाठे मम वचनेनाविचार्य्य। स०

(२) अनया राक्षसनामाङ्कितया मुद्रया मुद्रय अङ्कय।

(३) यत् आर्य्य आज्ञापयति आर्य्यायं स मुद्रितो लेखः, तस्मादाज्ञापयत्वार्य्यः किमपरमनुष्ठीयताम्। स०

(४) आर्य्य! अनुगृहीतोऽस्मि; तदाज्ञापयत्वार्य्यः, किमनेन दासजनेनार्य्यस्यानुष्ठातव्यम्। स०

चाण । भद्र ! प्रथमं तावद्वध्यस्थानं (१) गत्वा, घातकाः सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहितव्यास्ततस्तेषु गृहीतसंज्ञेषु भया (२) पदेशादितस्ततः प्रद्रुतेषु शकटदासो वध्यस्थानादपनीय, राक्षसं प्रापयितव्यः; तस्माच्च सुहृत्प्राणरक्षणपरितुष्टात्पारितोषिकं (३) ग्राह्यं; राक्षसएव कञ्चित्कालं सेवितव्यः; ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजनमिदमनुष्ठेयम् । कर्णे एवमेवम् (४) ।

सिद्धा । जं अज्जो आणवेदि त्ति(५) ।

चाण । शार्ङ्गरव ! शार्ङ्गरव !

---

(१) वध्यस्थानमिति । मयैव शकटदासस्य शूलारोपणं कपटेनोपदेक्ष्यते तत्स्थानाच्च मदुपदेशेनैव त्वत्संज्ञया चण्डालापसरे भूते तद्रक्षणं सम्भविष्यतीत्याशयः ।

(२) भयापदेशादिति यथा भवतः सकाशात् भयादेवापसृतिं व्यञ्जयित्वा ताभ्यामपसरिष्यते तथा मयोपदिष्टमिति भावः बधात् रक्षितेन तेन शकटदासेन सह राक्षससमीपे गमने तद्रक्षणे त्वयि राक्षसस्यातीव विश्वासः सेत्स्यतीत्याशयः ।

(३) पारितोषिकमिति । तस्यैव सुहृद्भेदने प्रधानोपयोगिताऽग्रे दर्शयिष्यते ।

(४) तेन पारितोषिकेण यथाकरणीयमन्यच्च यत् करणीयं तत् सर्वं कर्णे आह एवमिति पञ्चमाङ्के वर्णयिष्यमाणं सुहृद्भेदोपयोगिनं समुदितव्यापारमित्यर्थः ।

(५) यदार्य आज्ञापयति । स०

प्रविश्य । शिष्यः । उपाध्याय ! अज्ञापय ।

चाण । उच्यतां मद्वचनात् कालपाशिकौ, दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति, यएष क्षपणको जीवसिद्धि नाम, राक्षसप्रयुक्तो, विषकन्यया पर्व्वतेश्वरं घातितवान्। स एनमेव दोषं प्रख्याप्य, सनिकारं नगरान्निर्व्वास्यतामिति(१)।

शिष्यः । यदाज्ञापत्युपाध्यायः । इति परिक्रामति ।

चाण । वत्स ! तिष्ठ, तिष्ठ ; योऽयमपरः कायस्थः शकट दासो नाम, राक्षसप्रयुक्तो, नित्यमस्मच्छरीरमभिद्रोग्धुमिह प्रयतते ; स चाप्येनं दोषं प्रख्याप्य, शूलमारोप्यतां(२), गृह-जन-श्चास्य बन्धनागारे प्रवेश्यतामिति ।

शिष्यः । यदाज्ञापयत्युपाध्याय इति । निष्क्रान्तः ।

चाण । चिन्तां नाटयित्वा स्वगतम् । अपि नाम दुरात्मा राक्षसो गृह्येत (३) ।

सिद्धा । अज्ज! गहीदो (४) ।

---

(१) जीवसिद्धेर्निष्काशनम् आत्मकृतपर्व्वतेश्वरबधस्य राक्षसकर्त्तृकतया ख्यापनार्थं, निष्काशितेन च तेन मलयकेतुसमीपे राक्षसेनैव पर्व्वतेश्वरो हतो न चाणक्येनेत्यवमर्थस्य ख्यापनार्थञ्च ।

(२) शकटदासस्य शूलारोपणोपदेशस्ततः सिद्धार्थकेन रक्षणार्थं तद्रक्षणे च राक्षसस्य तस्मिन्नतीव विश्वासभाजनतासम्पादनार्थं तेन च पारितोषिकलाभस्तेनाग्रे वक्ष्यमाणं सुहृद्भेदरूपं महत् कार्य्यं भविष्यतीत्याशयेनैव ।

(३) गृह्येत इति सम्भावनायां लिङ् ।

(४) आर्य्य ! गृहीतः । स०

चाण। सहर्ष(१)मात्मगतम्। हन्त गृहीतो राक्षसः। प्रकाशम्। भद्र! कोऽयं गृहीतः।

सिद्धा। गहीदो मए अज्जस्स सन्देसो, ता गमिस्सं अहं कज्जसिद्धीए (२)।

चाण। साङ्गुलिमुद्रं लेखमर्पयित्वा। भद्र! सिद्धार्थक! गम्यताम् अस्तु ते कार्य्यसिद्धिः।

सिद्धा। जं अज्जो आणवेदि त्ति (३)। प्रणम्य निष्क्रान्तः।

प्रविश्य। शिष्यः। उपाध्याय! कालपाशिको, दण्डपाशिकश्च उपाध्यायं विज्ञापयतः। इदमनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति।

चाण। शोभनम्। वत्स! मणिकारश्रेष्ठिनं चन्दनदासमिदानीं द्रष्टुमिच्छामि।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य। इत, इतः, श्रेष्ठिन्!

चन्दनदासः। स्वगतम्। चाणक्कम्मि अअरुणे, सहसा सद्दाविदस्स लोअस्स बड्ढइ णिद्दोसस्सवि सङ्का, किं उण मम जातदोसस्स? ता भणिदा मए धणसेनप्पमुहा तिण्णि वाणिजिआ जधा कदाइ चाणक्कहदओ गेहं मे विचिणावेदि, ता अवहिदा

---

(१) राक्षसग्रहणे सम्भावनाऽस्ति वा न वेति चिन्तासमये गृहीत इति निश्चयसूचकवाक्यस्य सिद्धार्थकेन कथनात् चाणक्यस्य हर्षः।

(२) गृहीतः मया, आर्य्यस्य सन्देशः तस्माद्गमिष्याम्यहं कार्य्यसिद्धैर स०।

(३) यदार्य्य आज्ञापयति स०।

णिब्बहध भट्टिणो अमच्चरक्खसस्स घरअणं; मह दाव जं होदि, तं होदु त्ति (१)।

शिष्यः। भोः श्रेष्ठिन्! इत इतः।

चन्द। अअमागदोह्मि (२)। उभौ परिक्रामतः।

शिष्यः। उपाध्याय! अयं श्रेष्ठी चन्दनदासः।

चन्द। उपसृत्य। जअदु जअदु अज्जो (३)।

चाण। नाट्येनावलोक्य। भो श्रेष्ठिन्! स्वागतमिदमासनमास्यताम्।

चन्द। प्रणम्य। किं ण जाणादि अज्जो, जहा अणुचिदो उवआरो [सहिअअस्स] परिहवादोवि महन्तं दुःखमुप्पादेदि, ता इह ज्जेव अहं उचिदाए भूमोए उवविसामि(४)।

---

(१) चाणक्ये अकरुणे सहसा शब्दायितस्य लोकस्य निर्दोषस्यापि वर्द्धते शङ्का, किं पुनर्मम जातदोषस्य? तस्माद्भणिता मया धनसेनप्रमुखास्त्रयो वाणिजिकाः, यथा कदापि चाणक्यहतको गेहं मे विचिनोति तस्मादवहिता निर्व्वहत भर्त्तुरमात्यराक्षसस्य गृहजनं; मम तावत् यद्भवति तद्भवतु स०। अकरुणे निर्दये चाणक्ये विषये तमधिकृत्य। शब्दायितस्य चाणक्येन आहूतस्य शङ्का भयं वर्द्धते विचिनोति मार्गयति निर्वहत निष्काशयत अन्तःपुरात् स्थानान्तरं नयत।

(२) अयमागतोऽस्मि स०।

(३) जयतु जयत्वार्यः स०।

(४) किं न जानात्यार्यः, यथानुचित उपचारः, [सहिदअस्स] अधिकपाठे सहृदयस्य स०। परिभवादपि महद्दुःखमुत्पादयति; तस्मादिहैवोचितायां भूमावुपविशामि। स०

चाण । भोः श्रेष्ठिन् ! मा मैवं, उचितमेवैतदस्मद्विधैः सह भवतः, तदुपविश्यतामासन एव ।

चन्द । स्वगतम् । उवलक्खितमणेण किम्पि । प्रकाशम् । जं अज्जो आणवेदि त्ति (१) । उपविष्टः ।

चाण । भो श्रेष्ठिन् ! चन्दनदास ! अपि प्रचीयन्ते संव्यवहाराणां लाभा वः ।

चन्द । अज्ज ! अध इं ? । अज्जस्स पसाएण अखण्डिदा मे वाणिज्जा (२) ।

चाण । भोः श्रेष्ठिन् ! अपि कदाचित् चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान् (३) अधुना स्मारयन्ति प्रकृतीः (४) ।

चन्द । कर्णौ पिधाय । सन्तं पावं । सरअणिसासमुग्गमेण बिअ पुण्णिमाचन्देण, चन्दसिरिणा अधिअं णदन्ति पअदीओ (५)।

---

(१) उपलक्षितमनेन किमपि स० । मदीयापराधादिकम् उपलक्षितं ज्ञातम् । यतः अस्मद्विधैः सहेत्यादुक्तम् ।

यदार्य्य आज्ञापयतीति । स०

(२) आर्य्य, अथ किम् स० । प्रस्तुतविषयस्वीकारद्योतकमिदं पदद्वयम् तदेव स्फुटयन्नाह । आर्य्यस्य प्रसादेन अखण्डिता मे वाणिज्या स० ।

(३) अतिक्रान्ता अतीताये नन्दादयः पार्थिवास्तेषां गुणान् दयादाक्षिण्यादीन् चन्द्रगुप्तादधिकानित्यर्थः ।

(४) प्रकृतीः प्रकृतिभिरित्यर्थः स्मरणस्य ज्ञानविशेषार्थकतया तद्योगे प्रयोज्यकर्त्तरि कर्म्मसंज्ञाभावात् कवीनां निरङ्कुशतया प्रयोगः ।

(५) शान्तं पापं, शारदनिशासमुद्गमेन पूर्णिमाचन्द्रेण, चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः स० । शान्तं पापमनिर्द्दिश्ये इत्युक्तेः अत्राशर्य्ये शान्तं पापमिति नाटके प्रयुज्यते । न वक्तव्यमित्यर्थः ।

चाण । भोः श्रेष्ठिन् ! यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रियमिच्छन्ति राजानः ।

चन्द । आणवेदु अज्जो ! किं, कित्तिअं वा अत्यजादं इमादो जणादो इच्छीअदि त्ति (१) ।

चाण । भोः श्रेष्ठिन् ! चन्द्रगुप्तराज्यमिदं, न नन्दराज्यं यतो नन्दस्यैवार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति ; चन्द्रगुप्तस्य तु भवतामपरिक्लेश (२) एव ।

चन्द । सहर्षम् (३) । अज्ज ! अणुग्गहिदोह्मि ।

चाण । भोः श्रेष्टिन् ! स चापरिक्लेशः(४) कथमाविर्भवतीति न पुनः प्रष्टव्याः स्मो भवता ।

चन्द । आणवेदु अज्जो (५) ।

---

(१) आज्ञापयतु आर्यः ! किं, कियद्वा अर्थजातमस्माज्जनादिष्यत इति स० । अस्मात् मत्त इत्यर्थः ।

(२) भवतामपरिक्लेशः खेदाभाव एव न त्वर्थसंवन्धः चन्द्रगुप्तस्य प्रीतिमुत्पादयतीत्यनुकर्षः ।

(३) चन्द्रगुप्तस्यार्थारुचित्वोक्त्या चन्द्रगुप्तात् स्वार्थहानेरभावकथनात् चन्दनदासस्य हर्षः ।

(४) अन्यधर्म्मस्य क्लेशाभावस्यान्येन ज्ञातुमशक्यतया व्यञ्जकहेतुनैव तस्यानुमानमिति दर्शयन्नाह सचापरिक्लेश इति कथं केन प्रकारेण आविर्भवति व्यज्यते, अयं तस्याभिव्यक्तिप्रकार इति यावत् इति भवता स्म वयं न पुनः प्रष्टव्याः जिज्ञासितव्याः काकु अपि तु प्रष्टव्या एव। तथाच प्रकृतीनामपरिक्लेशव्यञ्जकः कोहेतुरिति भवता मां प्रति प्रष्टव्यमेवेत्यर्थः ।

(५) एवं चाणक्येनात्मानं प्रति परिक्लेशव्यञ्जकहेतुपृच्छायै नियोजितश्चन्दनदासः पृच्छति आणवेदु इति । आज्ञापयत्वार्य्यः स० । आर्यः आज्ञापयतु आदिशतु अपरिक्लेशव्यञ्जकः को हेतुरिति वदत्वित्यर्थः ।

चाण । संक्षेपतो(१) राजनि अविरुद्धाभिर्वृत्तिभिः [वर्त्ति तव्यम्] ।

चन्द । अज्ज ! को उण अधण्णो, [जो रआविरुद्धोत्ति] अज्जेण अवगच्छीअदि ? (२)

चाण । भवानेव तावत् प्रथमः ।

चन्द । कर्णौ पिधाय । सन्तं पावं सन्तं पावं कीदिसो तिणाणं अग्गिणा सह विरोहो (३) ।

चाण । अयमीदृशो विरोधो ; यत्त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि ।

---

(१) संक्षेपतः समासतः राजनि भूपतिविषये अविरुद्धाभिरप्रतिकूलाभिः वृत्तिभिर्व्यवहारैः अपरिक्लेश आविर्भवतीत्यनुकर्षः । अप्रतिकूलाचरणस्य परिक्लेशव्यञ्जकत्वमर्थात् सूचितम् [वर्त्तितव्यम्] इत्यधिकपाठे तादृशीभिर्वृत्तिभिर्यत् वर्त्तितव्यम् व्यवहर्त्तव्यम् तत् परिक्लेशाभिव्यञ्जकमित्यर्थः ।

(२) आर्य ! कः पुनरधन्य आर्येणावगम्यते स० । अविरुद्धाभिरित्यनेन विरुद्धवृत्तेः परिक्लेशव्यञ्जकत्वकथनात् राज्ञो विरुद्धव्यवहारस्यानिष्टत्वमाह क इत्यादि । अधन्यत्वोक्त्या तस्यानिष्टफलत्वमसुखकरत्वञ्चोपक्षिप्तम् [जो राअविरुद्धोत्ति] इति पाठे यो राजविरुद्ध इति स० । [राअ] इत्यत्र [राम्मि] [रस्मा] च पाठः क्वचित् दृश्यते राज्ञि, राज्ञा वा स० । राज्ञि राजविषये, राज्ञा सह वेत्यर्थः ।

( ३ ) शान्तं पापं शान्तं पापं कीदृशस्तृणानामग्निना सह विरोधः ।

चन्द। अज्ज! अलीअं एदं; केणावि अणज्जेण अज्जस्स णिवेदिदं (१)।

चाण। भोः श्रेष्ठिन्! अलमाशङ्कया, भीताः पूर्व्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति; ततस्तत्प्रच्छादनमेव दोषमुत्पादयति।

चन्द। एवस्सेदं; तस्सिं समये आसि अह्म(म्ह)घरे अमच्चरक्खसस्स घरअणो(२)।

चाण। प्रथममनृतमिदानीमासीदिति, परस्परविरोधिनी वचने (३)।

चन्द। एत्तिअं जेव्व अत्थि मे वाआच्छलं(४)।

चाण। भोः श्रेष्ठिन्! चन्द्रगुप्ते राजनि न परिग्रहः छलानां तत् समर्पय राक्षसस्य गृहजनमच्छलं भवतु भवतः।

चन्द। अज्ज, णं विण्णवेमि, तस्सिं समये आसी अह्म(म्ह)-घरे अमच्चरक्खसस्स घरअणो त्ति (५)।

---

(१) आर्य्य! अलीकमेतत्; केनाप्यनार्य्येण आर्य्यस्य निवेदितम् स०

(२) एवं नु इदम्; तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः स०।

(३) अलीकमेतदिति वदता स्वगृहे राक्षसगृहजनस्य स्थितेर्मिथ्यात्वमुक्तम् इदानीमासीदिति कथनेन कालविशेषे स्थितिरुक्तेत्यनयोर्वचनयोः परस्परविरोधित्वम्।

(४) एतावदेवास्ति मे वाक्छलं स०। छलं निरस्य भूतेनेति स्मृतेः वाक्छलं राज्ञा न ग्राह्यमिति सूचयन्नाह एत्तिअमिति एतावत् पूर्व्वापरविरोधरूपं वाकछलम् न तु तत्कृतनिह्नवरूपापराधः।

(५) आर्य्य! ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

चाण। अथेदानीं क्व गतः ;

चन्द। ण जाणामि कहिं गदो त्ति (१)।

चाण। स्मितं कृत्वा। कथं न ज्ञायते नाम? भोः श्रेष्ठिन्! शिरसि फणी, दूरे तत्प्रतीकारः (२)। अन्यच्च नन्दमिव विष्णुगुप्त (३)। इत्यर्द्धोक्तौ लज्जां नाटयित्वा।

चन्द। स्वगतम्।

उवरि घणाघणथणिअं दूरे दइआ किमेददावडिअम्।
हिमवदि दिव्वोसहिओ सीसे सप्पो समाविट्टो (४)॥

---

(१) न जानामि कुत्र गत इति स०।

(२) फणी सर्पतुल्यः असह्यविक्रमो राजदण्डः शिरसि उपस्थितः राजद्रोहिणा सह सन्धानात्। तत्प्रतीकारः तस्य फणिविषतुल्यराजदण्डस्य निवारणोपायः दूरे राक्षसमैत्र्या राक्षसेन चन्द्रगुप्तस्य हनने तन्निवारणं भविष्यतीति प्रत्याशा दूरवर्त्तिनी फलिष्यति नवेति सन्देह एव। तथाच उपस्थितं परित्यज्य योऽध्रुवं तु विचिन्तयेत् इत्युक्तरीतिरागतेति भावः।

(३) विष्णुगुप्तश्चाणक्यः। स्वकृतनन्दहननस्य उपमानतया स्वेन-कथनमतीवानुचितमित्यतश्चाणक्यस्य लज्जा।

(४) उपरि घनाघनस्तनितं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः स०। घनाघनस्तनितं मेघध्वनिः उपरि उपस्थितमित्यर्थः दयिता दूरे विरहिणां मेघध्वनेरत्यन्तदुःखजननहेतुत्वम्। तत्प्रतीकारस्तु प्रियासङ्गम एव तस्याश्च दूरस्थितत्वात् कथञ्चन न सम्भवतीत्यर्थः। एवं शीर्षे सर्पः समाविष्टः तत्प्रतीकारोपायभूता दिव्यौषधयः हिमवति हिमाद्रौ अतिदूरे इत्यर्थः वर्त्तन्ते एतत् इत्युक्तं द्वयं किमापतितमुपस्थितम्।

चाण । चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्थाः । पश्य ।

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभि
र्नन्दे जीवति, या तदा न गमिता स्थैर्य्यं चलन्ती मुहुः ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत् पृथक् (१) ।

अपिच ।

आस्वादितेत्यादि प्रागुक्तं(२) पठति ।

चन्द । स्वगतम् । फलेण संपादिदं सोहृदि दे बिकत्थिदं(३) ।

नेपथ्ये । उत्सारणा (४) क्रियते ।

चाण । शार्ङ्गरव ! ज्ञायतां किमेतत् ?

शिष्यः । यदाज्ञापयत्युपाध्याय इति । निष्क्रम्य, पुनः प्रविश्य ।

---

(१) विक्रान्तैर्विक्रमशालिभिः न केवलं विक्रमयुक्तैरपि तु नयशालिभिः नीतियुक्तैः सुसचिवैः अनुरक्तैः वक्रनासादिभिः, जीवति नन्दे मुहुश्चलन्ती अत्यन्तचञ्चला या श्रीः स्थैर्य्यं न गमिता प्रापिता । तां श्रियम् एकत्वं स्थिरत्वमुपागतां प्राप्तां मया हेतुनेत्यर्थात् जगत् ह्लादयन्तीं द्युतिं चन्द्रिकामिव चन्द्रादिव चन्द्रगुप्तनृपतेः पृथक् कर्त्तुम् दूरीकर्त्तुं कः व्यवसेत् उद्यच्छेत् अपि तु न कोऽपि तत्कर्त्तुं समर्थो भविष्यतीत्यर्थः सम्भावनायाम् लिङ् ।

(२) १४ पृष्ठे पठितम् ।

(३) फलेन संबादितं शोभते ते बिकत्थनम् स० ।

(४) उत्सारणा दर्शनार्थं मिलितानां लोकानामत्यन्तं संमर्द्दात् गतागतनिरोधः अतः तन्निवारणाय तेषामपसारणा ।

उपाध्याय! एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं (१) नगरान्निर्वास्यते।

चाण। क्षपणक! अहह; अथ वा, अनुभवतु राजापथ्यकारित्वस्य फलम्। भोः श्रेष्ठिन् (२)! चन्दनदास! एवमयं, राजापथ्यकारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं सुहृद्वचः; समर्प्यतां राक्षसगृहजनः, चिरमनुभूयन्तां विचित्रा राजप्रसादाः।

चन्द। णत्थि मे गेहे अमच्चवरअणो (३)।

ततो नेपथ्ये कलकलः।

चाण। शार्ङ्गरव! ज्ञायतां पुनः किमेतत्।

शिष्यः। यदाज्ञापयत्युपाध्याय इति निष्क्रम्य, पुनः प्रविश्य। उपाध्याय! असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलमारोपयितुं नीयते।

चाण। स्वकर्म्मफलभाग् भवतु! भोः श्रेष्ठिन्, एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः, तद्रक्ष परकलत्रेणात्मनः (४) कलत्रं जीवितञ्च।

---

(१) सनिकारं सतिरस्कारं तिरस्कृत्येत्यर्थः निर्वास्यते वहिष्क्रियते

(२) चन्दनदासेन सह कथोपकथनसमये क्षपणकस्य राजदण्डवर्णनं तदुत्त्रासनार्थमेवमग्रेऽपि।

(३) नास्ति मे गेहे अमात्यराक्षसगृहजनः स०।

(४) परकलत्रेण परकलत्रार्पणेन आत्मनः कलत्रं जीवितञ्च रक्ष अन्यथा तदनर्पणे तव कलत्रजीवनयोरपगमः स्यादित्याशयः।

चन्द । अज्ज, किं मे भअं दंसेसि ? संतं पि गेहे अमच्च-रक्खसस्स घरअणं ण समप्पेमि ; किं उण असन्तं (१) ?

चाण । चन्दनदास ! एष ते निश्चयः ।

चन्द । बाढ़ं ; एसो मे थिरो णिच्चओ (२) ।

चाण । स्वगतम् । साधु चन्दनदास ! साधु !

सुलभेष्वर्थलाभेषु परसंवेदने जनः ।

क इदं दुष्करं कुर्य्यादिदानीं शिविना विना(३) ॥

प्रकाशम् । चन्दनदास ! एष ते निश्चयः ।

चन्द । बाढ़ं ; एसो मे थिरो णिच्चओ (४) ।

चाण । सक्रोधम् । दुरात्मन् दुष्टवणिक् ! अनुभूयतां तर्हि राजकोपः ।

---

(१) आर्य्य ! किं मे भयं दर्शयसि ? सन्तमपि गेहे अमात्य-राक्षसस्य गृहजनं न समर्पयामि किं पुनरसन्तम् स० ।

(२) एष मे स्थिरो निश्चयः स० ।

(३) अर्थानां लाभो येभ्यस्तादृशेषु धनोपार्ज्जनोपायेषु सुलभेषु सुकरेषु सत्सु इदानीमस्मिन् कलियुगे काले शिविना तन्नामधेयेन नृपेण विना परसंवेदने संविद्यतेऽनुभूयते इति संवेदनं सुखदुःखादि, प्रकरणादत्र दुःखं परस्य इतरस्य संवेदने दुःखे तद्विषये इदमुक्तप्रकारं स्वजीवन-दानेनापि परकलत्रादिरक्षणरूपं दुष्करं कर्म्म को जनः कुर्य्यात् अपि तु न कोऽपि । धनार्ज्जनोपायार्थत्वेन तथाचरणं स्यादित्याशङ्क्य तेषां सुलभत्वं प्रदर्शितम् ।

(४) एष मे स्थिरो निश्चयः स० । स्वजीवननाशेऽपि अमात्य-कलत्रस्यासमर्पणरूपो निश्चयः निश्चीयमानोऽर्थः ।

चन्द । बाहू प्रसार्य । सज्जोह्मि, अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स अणुरूअं [सरिसं] (१) ।

चाण । सक्रोधम् । शार्ङ्गरवोच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिकश्च ; शीघ्रमयं दुष्टवणिक् निगृह्यताम् ; अथ वा तिष्ठतु ; उच्यतां दुर्गपालो विजयपालश्च, गृहीतगृहसार-मेनं सपुत्रकलत्रं संयम्य, रक्ष तावत्, यावन्मया वृषलाय कथ्यते, स एवास्य सर्व्वस्वप्राणहरणं दण्डमाज्ञापयिष्यति ।

शिष्यः । यदाज्ञापयत्युपाध्यायः । इति श्रेष्ठिन्! इत इतः ।

चन्द । उत्थाय । अज्ज ! अअमाअच्छामि । स्वगतम् । दिट्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिसदोसेण(२) ।

परिक्रम्य शिष्येण सह निष्क्रान्तः ।

चाण । सहर्षम् । हन्त, लब्ध इदानीं राक्षसः । कुतः

त्यजत्यप्रियवत्प्राणान् यथा तस्यायमापदि ।
तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः (३) ॥

---

(१) सज्जोऽस्मि अनुतिष्ठतु आर्यः आत्मनोऽधिकारस्य अनुरूपम् [सरिसं] इति पाठे सदृशम् स० ।

(२) आर्य ! अयमागच्छामि । दिष्ट्या मित्रकार्य्येण मे विनाशो जनितो, न पुनः पुरुषदोषेण स० । पुरुषदोषेण आत्मार्थं कृतेन सर्व्व-पुरुषसाधारणेन दोषेण न विनाशो जनित इत्यनुषङ्गः :

(३) अयं चन्दनदासः तस्य राक्षसस्य आपदि कलत्ररक्षणरूपाप-दुद्धारणाय प्राणान् अप्रियवत् अप्रियैरनभीष्टैस्तुल्यं यथा त्यजति अस्य चन्दनदासस्यापदि सकलत्रत्राणार्थं विनाशरूपे राजदण्डे सति तथैव

नेपथ्ये कलकलः ।

चाण । शार्ङ्गरव !

प्रविश्य शिष्यः । उपाध्याय ! आज्ञापयतु ।

चाण । ज्ञायतां किमेतत् ।

निष्क्रम्य विभाव्य पुनः प्रविश्य सम्भ्रान्तः शिष्यः । उपाध्याय ! एष खलु शकटदासं वध्यमानं वध्यभूमेरादाय समपक्रान्तः सिद्धार्थकः ।

चाण । स्वगतम् । साधु सिद्धार्थक ! साधु, कृतः कार्य्यारम्भः(१) । प्रकाशम् । प्रसह्य किमपक्रान्तः । सक्रोधम् । वत्स ! उच्यतां भागुरायणो यथा त्वरितमेनं सम्भावयति ।

शिष्यः । पुनः तथा कृत्वा प्रविश्य सविषादम् । उपाध्याय ! हा धिक् कष्टमपक्रान्तो भागुरायणः (२)।

चाण । स्वगतम् । व्रजतु कार्य्यसिद्धये(३) । प्रकाशम् सक्रोध-

---

तस्य राक्षसस्यापि प्राणाः प्रिया न भविष्यन्ति तस्य कृतोपकारित्वात् अभिमतचन्दनदासेन सहाभिन्नहृदयत्वाच्च नूनमुत्प्रेक्षे सम्भावयामीति ।

(१) कार्य्यारम्भः स्वमन्त्रितस्य शकटदासस्य वध्यभूमेरादायापसरणरूपस्य कार्य्यस्य आरम्भः साधु यथा स्यात् तथा कृतः । तथा करणे च तस्य राक्षससविधे विश्वासभाजनता स्यात् इति ते न चाग्रे वर्णयिष्यमाणं महत्कार्य्यं भविष्यतीति तस्य साधुत्वम् ।

( २ ) भागुरायणापसरणं मलयकेतोराश्रयणेनाग्रे वर्णयिष्यमाणकार्य्यसम्पादनार्थं तच्च चाणक्येनैवोपदिष्टम् ।

(३) कार्य्यस्य अग्रे वर्णयिष्यमाणस्य कृत्यस्य स्वोपदिष्टस्य सिद्धये निष्पादनाय ।

मिव। वत्स! कृतं विषादेन, उच्यन्तामस्मद्वचनाद्भद्रभटपुरुष-दत्तडिङ्गुरातबलगुप्तराजसेनरोहिताक्षविजयवर्म्माण:, शीघ्र-मुपसृत्य, गृह्यतां दुरात्मा भागुरायणः।

शिष्यः। यदाज्ञापयत्युपाध्यायः। इति निष्क्रम्य पुनः प्रविश्य सविषादम्। उपाध्याय! हा धिक् कष्टं, सर्व्वमेव (१) तन्त्रमा-कुलीभूतं तेऽपि खलु भद्रभटप्रभृतयः प्रथमप्रभातायामेव रजन्या मपक्रान्ताः।

चाण। स्वगतम्। सर्व्वेषामेव शिवाः पन्थानः सन्तु। प्रकाशम्। वत्सालं विषादेन। पश्य

ये याताः किमपि प्रधार्य्य हृदये, पूर्व्वं गता एव ते
ये तिष्ठन्ति, भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्य्य महिमा बुद्धिस्तु मा गान्मम (२)॥

---

(१) तन्त्रं प्रकृतिमण्डलमाकुलीभूतमनवस्थितमर्य्यादं प्रायोऽनेकेषामपसरणात्।

(२) किमपि मदुपदिष्टमनुपदिष्टं वा इष्टं हृदये प्रधार्य्य अवधार्य्य ये भागुरायणादयः याताः मलयकेतोः समीपे इत्यादि। ते पूर्व्वमेव गताः हृदयचिन्तानुसारित्वात् स्वस्वगतेः, अत्र इदानीं ये तिष्ठन्ति तेऽपि गमने मलयकेतुसमीपगतौ प्रकामोद्यमाः प्रकाम्यमानोत्साहाः कामं यथेष्टं सन्तु भवन्तु तैर्विनाऽपि कार्य्यस्य स्वबुद्ध्यैव मया सम्पाद्यत्वात् न तैः प्रयोजनमिति भावः। अर्थसाधनविधौ प्रयोजनसम्पादनरूपे विधाने सेनाशतेभ्यो बहुशतसेनाभ्यः अधिका अधिककार्य्यक्षमा नन्दानामुन्मूलने दृष्टो वीर्य्यमहिमा कार्य्यक्षमतातिशयो यस्यास्तादृशी

उत्थाय प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । एष खलु दुरात्मनो भद्रभट-प्रभृतीनाहरामि । आत्मगतम् । दुरात्मन् राक्षस(१) ! क्वेदानीं यास्यसि । एषोऽहमचिराद्भवन्तम्

स्वच्छन्दमेकचरमुज्ज्वलदानशक्ति-
मुत्सेकिना बलमदेन विगाहमानम् ।
बुद्ध्या निगृह्य, वृषलस्य कृते, क्रियाया
मारण्यकं गजमिव प्रगुणीकरोमि (२) ॥

---

एका अद्वितीया मम बुद्धिः केवलं मा गात् न गच्छतु तयैव सर्व्वकार्य्यं साधयिष्यामीति भावः। बुद्धेः सर्व्वकार्य्यक्षमताद्योतनार्थं नन्दोन्मूलने-त्यादि विशेषणम् ।

(१) स्वनियुक्तपुरुषैः राक्षसस्य व्यापनात् तस्य सुखग्राह्यत्वं द्योतय न्नाह क्वेदानीमित्यादि । इदानीं ममैव प्रणिधिभिरेवं व्याप्तः क्व कस्मिन् पुरुषे विश्वस्य स्वकर्त्तव्यपारं यास्यसि न कस्यापि तवार्थसाधनहेतुत्वं सर्व्वेषामेव मत्प्रणिधित्वात् । अथ वा क्व कस्मिन् देशे यास्यसि पलायिष्यते पलायमानोऽपि धारयिष्यत एव पलायमानस्य स्वगणैरनुस्त्रियमाणत्वं लोक सिद्धं सर्व्वेषाञ्च भवदनुगतानां मत्प्रणिधित्वात् तैरेव तव संधारणं करिष्यते इति तव पलायनमपि दुर्घटमिति भावः ।

(२) एकः सहायहीनः यूथहीनश्च सन् चरतीति तादृशम् उज्ज्वला उत्कृष्टा दानशक्तिः वितरणशक्तिर्मदजलक्षरणसामर्थ्यञ्च यस्य तथाविधम्, उत्सेकिना उद्रिक्तेन बलमदेन सैन्यगर्व्वेण देहजसामर्थ्य-गर्व्वेण च स्वच्छन्दं यथेच्छं विगाहमानं भवन्तमिति गद्यस्थपदमत्रानु-कृष्यमाणमन्वेति । वृषलस्य चन्द्रगुप्तस्य कृते निमित्तं तत्प्रयोजनसाधना-येत्यर्थः। बुद्ध्या निगृह्य आयत्तीकृत्य आरण्यकमरण्यभवं दुर्दमत्वसाम्यात्

इति निष्क्रान्ताः सर्व्वे (१)।

इति मुद्राराक्षसे (२) प्रथमोऽङ्कः (३)।

---

गजमिव क्रियायां वृषलस्यैव साचिव्यादिकरणे वाहनादिकृत्ये च प्रगुणीकरोमि अधीनं करोमि; प्रकृष्टदामान्वितं सुबद्धमिति यावत् करोमि चेत्यर्थः।

(१) पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गम इत्युक्तेः प्रविष्टपात्राणा-मङ्कशेषे निष्क्रमणस्यावश्यकत्वात् निष्क्रान्ताः सर्व्वे इत्युक्तम्।

(२) मुद्रां राक्षसाङ्गुरीयकस्थमुद्रां राक्षसं च अधिकृत्य कृतो ग्रन्थः। तदधिकृत्य कृते ग्रन्थे इत्यणि द्वन्द्वात् परस्य तस्य लुक्। यद्वा मुद्रया राक्षसाङ्गुरीयस्थमुद्रया जितो राक्षसो यत्र मध्यपदलोपी-समासः।

(३) प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वल इत्याद्युक्तलक्षणः अङ्कः साहि० ३ परि०।



# मुद्राराक्षसम् ।

## द्वितीयोऽङ्कः ।

ततः प्रविशत्याहितुण्डिकः (१) ।

आहि । जाणन्ति तन्तजुत्तिं जहट्ठिअं मण्डलं अहिलिहन्ति ।
जे मन्तरक्खणपरा ते सप्पणराहिवे उवचरन्ति(२) ॥

---

(१) अहितुण्डेन सर्पमुखेन दीव्यति ठक्। सर्पखेलनोपजीवीत्यर्थः।

(२) जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभि लिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति ॥ स०

ये जनास्तन्त्रयुक्तिं सिद्धान्तोक्तन्यायं सर्पौषधयोजनञ्च यथास्थितं जानन्ति मण्डलं द्वादशराजमण्डलं मण्डलाकारवेष्टनञ्चाभि अभिलक्ष्य लिखन्ति अयं राजसु मित्रं अयममित्रः इति विशेषतो ज्ञात्वा पत्रारूढान् कुर्व्वन्ति पक्षे लिखन्ति विदारयन्ति भूमिमिति शेषः सर्पकुण्डलनरूपमण्डलस्थानं ज्ञात्वा भूमिं विदारयन्तीत्यर्थः । ये च मन्त्रस्य मन्त्रणाकार्य्यस्य रक्षणे गोपने पराः पक्षे मन्त्रैः गारुड़मन्त्रैः रक्षणे आत्मरक्षणे परा आसक्तास्ते जनाः सर्पे एव नराधिपः यत्किञ्चित्स्खलनेऽपि तीक्ष्णप्रतापेन प्राणहरत्वात् । तस्मिन् उपचरन्ति व्यवहरन्ति नान्ये। एतेन राज्यतन्त्रावेक्षकस्य किञ्चित्स्खलने नाशः स्यादिति सूचितम् । अस्मिन्

आकाशे । अज्ज किं भणासि ? को तुमं त्ति ? अज्ज ! अहं क्खु आहितुण्डिओ जिस्सविसो णाम । पुनराकाशे । किं भणासि अहंपि अहिणा खेलिदुं इच्छामि त्ति ? अध कदरं उण अज्जो वित्तिं उवजीवदि । पुनराकाशे । किं भणासि ? राअउलसेवओ त्ति । णं खेलदि ज्जेव अज्जो अहिणा ? (१) किं भणासि कधं त्ति? अमन्तोसहिकुसलो बालग्गाही, अग्गहदङ्कुसो मत्तगअवरारोही, लद्धाहिआरो जिअकासी राजसेवओ त्ति, एदे तिण्णि अवस्सं विणासमणुभवन्ति(२) ।

---

प्रकरणे चात्र राक्षसस्य प्रमत्ततया स्वाश्रितवर्गापरीक्षणेन स्वपदच्युतिरूपानिष्टप्राप्तिर्भविष्यतीति तत्सूचनाय नराधिपे सर्पत्वारोप इति द्रष्टव्यम् ।

(१) आर्य ! किं भणसि कस्त्वमिति स० । एवमाकाशस्थादृश्यपुरुषवाचं स्वयमेवोक्त्वा प्रत्युत्तरयति अज्जेति एवमग्रेऽपि । आर्य ! अहं खलु आहितुण्डिको जीर्णविषो नाम स० । किं भणसि अहमपि अहिना खेलितुमिच्छामीति स० । अथ कतरां पुनरार्य्यो वृत्तिम् उपजीवति स० । किं भणसि राजकुलसेवक इति स० । ननु खेलति एव आर्य्योऽहिना स० । राजकुलसेवनस्य किञ्चित्स्खलने स्वप्राणहरत्वात्तथात्वमिति भावः ।

(२) किं भणसि कथमिति । अमन्त्रौषधिकुशलो व्यालग्राही, अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारो जितकाशी राजसेवक, इत्येते त्रयोऽवश्यं विनाशमनुभवन्ति स० । अमन्त्रौषधिकुशलः मन्त्रे गारुड़मन्त्रे ओषधौ च अकुशलः व्यालग्राही सर्पखेलनोपजीवी, अगृहीताऽङ्कुशो येन तादृशो मत्तगजवरारोही मत्तहस्तिश्रेष्ठारोही, लब्धोऽधिकारः कार्य्यप्रभुता येन तादृशः जितकाशी जिताहवो जयी वा राजसेवक इत्येते त्रयोऽवश्यं विनाशं किञ्चिन्मात्रस्खलनेऽपि अत्ययमनुभवन्ति यान्तीत्यर्थः ।

कथं, दिट्ठमत्तो अदिक्कन्तो एसो । पुनराकाशे । अज्ज ! तुमं उण किं भणासि ? किं एदेसुं पेड़ासमुग्गकेसुं त्ति ? अज्ज ! अप्पजीविआसम्पादआ सप्पा । पुनराकाशे । किं भणासि ? पेक्खिदुमिच्छामि त्ति । पसीददु पसीददु अज्जो अत्थानं क्खु एदं ; ता जइ दे कोदूहलं, ता एहि एदस्सिं आआसे दंसेमि । पुनराकाशे । किं भणासि एदं क्खु भट्टिणो अमच्च-रक्खसस्स गेहं, णत्थि इध अह्मारिसाणं प्पवेसो त्ति, तेण हि गच्छतु अज्जो ! जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसो त्ति ; कधं एसोवि अतिक्कन्तो (१) । दिशोऽवलोक्य संस्कृतमाश्रित्य स्वगतम् । अहो ! आश्चर्य्यम् ; चाणक्यमति-परिगृहीतं (२) चन्द्रगुप्तमवलोक्य, विफलमिव राक्षसप्रयत्न-

---

(१) कथं ; दृष्टमात्रोऽतिक्रान्त एषः स० । आर्य्य ! त्वं पुनः किं भणसि, किमेतेषु पेटकसमुद्गकेष्विति स० । आर्य्य ! आत्मजीविका-सम्पादकाः सर्पाः स० । किं भणसि, प्रेक्षितुमिच्छामीति स० । प्रसीदतु-प्रसीदत्वार्य्यः ! अस्थानं खलु एतत् ; तस्मात् यदि ते कौतूहलं तदेहि एतस्मिन्नावासे दर्शयामि स० । किं भणसि इदं खलु भर्त्तुरमात्यराक्षसस्य गृहं, नास्त्यत्रास्मादृशानां प्रवेश, इति स० । तेन हि गच्छत्वार्य्यः, जीविकायाः प्रसादेन अस्तीह मम प्रवेश इति स० । कथमेषोऽपि अतिक्रान्तः स० ।

(२) चाणक्यस्य मतिः बुद्धिः प्रवर्त्तनाख्या परिगृहीता येन निष्ठान्तस्य परनिपातः । चन्द्रगुप्तं तादृशमवलोक्य राक्षसप्रयत्नं विफल-मिव चाणक्यबुद्धिसाहाय्यमधिजग्मुषि चन्द्रगुप्ते फलजननासमर्थात् वितथमिवावगच्छामि सम्भावयामि एवं राक्षसमतीत्यादेरर्थः एतेन सचिवयोरुभयोरपि बुद्धिकौशलमतीवेति द्योतितम् ।

मवगच्छामि। राक्षसमतिपरिगृहीतञ्च मलयकेतुमवलोक्य, चलितमिवाधिराज्याच्चन्द्रगुप्तमवगच्छामि। तथाहि (१)

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीम्।
उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि (२)॥

तदेवमनयोः सुनयशालिनोः सचिवयोर्व्विरोधे संशयितेव राज्य[नन्दकुल]लक्ष्मीर्लक्ष्यते। कुतः

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययो-
र्महावने वनगजयोरिवान्तरे।
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिह खिद्यते श्रिया (३)॥

तद्यावदहममात्यराक्षसं पश्यामि।

---

(१) उभयोर्बुद्धिकौशलं दर्शयितुमाह तथाहीति।

(२) मौर्य्यकुलस्य चन्द्रगुप्तस्य लक्ष्मीं राज्यश्रियम् कौटिल्यस्य चाणक्यस्य धीर्बुद्धिरेव स्थिरतापादनहेतुत्वात् रज्जुः तया निबद्धा मूर्त्तिर्यस्यास्तादृशीमतएव रज्जुबन्धनेन स्थिरामिव मन्ये अपि तथा राक्षसेन उपायाः सामादय एव हस्ताः आकर्षणहेतुत्वात् तैर्विकृष्य-माणामाकृष्यमाणामिव लक्षयामि उत्प्रेक्षे रज्जुबद्धमपि हस्तेनाकृष्य-माणं लोकसिद्धमित्यतस्तथोत्प्रेक्षा।

(३) इहोपस्थितविषये भृशं विरुद्धयोरन्योन्यजयार्थं विरोधमा-चरतोः महावने वनगजयोरिव मन्त्रिमुख्ययोरमात्यवरयोश्चाणक्य-राक्षसयोः अन्तरे मध्ये स्थितयेति शेषः अनिश्चयात् कस्य जयो भवि-

ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः
सचिन्तो राक्षसः ।

राक्ष । ऊर्द्ध्वमवलोक्य सवाष्पम् । कष्टं भोः, कष्टम् ।
वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम् ।
चिन्तावेशसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्म्मरचना भित्तिं विना वर्त्तते (१) ॥
अथवा
नेदं विस्मृतभक्तिना न विषयव्यापारमूढात्मना
प्राणप्रच्युतिभीरुणा न च मया, नात्मप्रतिष्ठार्थिना ।

---

ष्यतीति निश्चयाभावात् भीतया गजवशया हस्तिन्येव श्रिया राजलक्ष्म्या गतागतैः नन्दकुलात् मौर्य्ये गतिः, पुनर्मौर्य्यात् नन्दकुले आगतिरित्येवं गमनागमनाभ्यां भृशमिव प्रयासबाहुल्यात् खिद्यते इव ।

(१) नीतिर्दण्डनीतिः विक्रमः शौर्य्यं गुणाः सन्धिविग्रहादयः तेषां व्यापारेण यथायथं प्रयोगेण शान्ताः शमिता द्विषो रिपवो यैस्ता-दृशानां वृष्णीनां यादवानामिव नन्दानां पुत्राष्टकसहितयोगानन्दस्य विपुलेऽखिले कुले अकरुणया अननुकूलया नियत्या भाग्येन क्षयं विनाशं नीते सति चिन्तावेशसमाकुलेन कथमापदुद्धारः स्यादित्येवं चिन्तासक्ति-व्याकुलेन मनसा रात्रिन्दिवं रात्रौ च दिवा च अचतुरेत्यादिना निपातः । जाग्रतः चिन्तान्वितस्य निद्राभावात् सा इयं चिन्ता कल्पितविषयाव-लम्बनेन तद्विषयसंकल्पविकल्पयोजीयमाना भित्तिं चित्रलेखनकुड्यादि-स्थानं विनाऽपि चित्रकर्म्मरचनैव वर्त्तते अनवरता चिन्ता निराधारा चेत्यर्थः ।

अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति (१) ॥
आकाशमवलोकयन् सास्रम् । भगवति ! कमलालये ! भृशम-
गुणज्ञासि । कुतः

आनन्दहेतुमपि देवमपास्य नन्दं
रक्तासि किं, कथय, वैरिणि मौर्य्यपुत्त्रे ।
दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न, चपले ! प्रलयं गतासि (२) ॥

---

(१) परदास्यं पराधीनत्वमेत्य यत् नीतौ मनोऽत्यर्थं दीयते इदं नीतौ मनोदानं न विस्मृतभक्तिना स्वाम्यनुरक्तिं स्मरतैव दीयते इत्यर्थः स्वामिगुणविस्मरणे तन्मरणे नीतौ मनोदानासम्भवादेवमुक्तम् । अविस्मृतभक्तेरपि कार्य्याकार्य्यमजानतो न कार्य्यसिद्धिरित्यतस्तदभावम् स्वात्मनि दर्शयति न विषयेति । विषयव्यापारे यथायथं सामादिप्रयोगे मूढ़ आत्मा अन्तःकरणं यस्य न तथाभूतेन इदं नीतौ मनोदानमपि तु अमूढ़ात्मनैवेत्यर्थः । तथाभूतस्यापि भीरुत्वे न कार्य्यसिद्धिरित्यतस्तद-भावमप्यात्मनि दर्शयति न प्राणेति प्राणच्युतिः प्राणनाशस्ततो भीरुणा न किन्तु तस्या अभीरुणैव इदं मनो दीयते इत्यर्थः । तत् किमात्मनः प्रतिष्ठा यशस्तदाशयैव नीतौ मनो दीयते नेत्याह नात्मप्रतिष्ठाशया आत्मनो यशोवाञ्छया न किन्तु देवः योगानन्दः स्वर्गगतोऽपि शात्रववधेन तदीय-रिपूणां मया नाशनेन आराधितः तत्प्रार्थितस्य मया सम्पादनात् सन्तोषितः स्यात् इत्येव उद्दिश्य मनो दीयते इत्यर्थः ।

(२) हे चपले ! चपलस्वभावे ! कार्य्याकार्य्यमूढ़े ! च लक्ष्मि ! आनन्द-हेतुं नन्दं देवमपास्य मौर्य्यपुत्त्रे किं कथं रक्तासि । गन्धगजस्य दानाम्बु-

अपिच। अनभिजाते (१)।

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः,
पतिं, पापे! मौर्य्यं यदसि कुलहीनं कृतवती।
प्रकृत्या वाकाशप्रभवकुसुमप्रान्तचपला,
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी (२)॥

---

गन्धप्रधानहस्तिनो नाशे तदभिहितो भावो द्रव्यवत्प्रकाशते इत्युक्तेः तादृशे द्विपे नष्टे इत्यर्थः दानाम्बुराजिः मदजलपङ्क्तिरिव तत्र नन्दे एव तेन सहेत्यर्थः किं कथं प्रलयं न गताऽसि। समुचिताश्रये नष्टे तत्रैव लय एवाश्रयिणः उचितः त्वया तु न तथाचरितं प्रत्युत सदाश्रये नष्टे असदाश्रयो गृहीतस्तच्च न युक्तं तथाच असत्पुरुषाश्रयणापेक्षया मरणमेव वरमिति भावः। चपले इति सम्बोधनेन कार्य्यविमूढ़ता श्रियः सूचिता।

(१) अनभिजाते दुष्कुलीने दुष्कुलजाताया एव असदाचरणे प्रवृत्तिरित्येतत् सम्बोधनेन सूचितम्।

(२) प्रथितकुलजाः विख्यातकुलोद्भवाः भूमिपतयः राजानः किं पृथिव्यां दग्धाः नष्टाः अपि तु नैव दग्धाः हे पापे! पापाचरणे! दुष्ट-कर्म्मकारिणि! लक्ष्मि! यत् यस्मात् कुलहीनं दुष्कुलजातं मौर्य्यं पतिं कृतवती महाकुलजातविरहे एव दुष्टकुलजात पतिकरणं कथञ्चिदर्हति तथा चान्येषां महाकुलानां सम्भवे दुष्कुलजाश्रयणमतीव दुष्टाचरणमेवेति भावः। अथ वा पुरन्ध्रीणां स्त्रीणाम् आकाशकुसुमप्रान्तचपला आकाशः प्रभवो यस्य कुसुमस्य तत्कुसुमस्य प्रान्त इव चपला चञ्चला प्रज्ञा बुद्धिः प्रकृत्या स्वभावेनैव पुरुषाणां गुणस्य विज्ञाने विशेषतो विवेचने विमुखी भवति।

अपिच। अविनीते! तदहमाश्रयोन्मूलनेनैव त्वामकामां करोमि। विचिन्त्य। मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम् किंकारणमिति? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति, तत्रस्थानामस्माभिः सहैककार्य्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यतीति। चन्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां तीक्ष्णरसदायिनामुपसंग्रहार्थं, परकृत्योपजापार्थञ्च (१), महता कोषसञ्चयेन स्थापितः शकटदासः। प्रतिक्षणमरातिवृत्तान्तोपलब्धये; तत्संहतिभेदाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयस्तत् किमत्र बहुना।

इष्टात्मजः सपदि सान्वय एव देवः,
शार्दूलपोतमिव यं परिपुष्य नष्टः।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यमानम् (२)॥

---

(१) परकृत्यस्य परेषां शत्रूणां कृत्यमेव कृत्यं कार्य्यं येषां तादृशानां पुरुषाणामुपजापार्थं भेदार्थं प्रचुरधनादिदानेन ते पुरुषा यथा शत्रुभ्यो भिद्येरन् तथाचरणार्थमित्यर्थः।

(२) इष्टः प्रिय आत्मजो यस्य सः। योगानन्दो हि मृतस्य प्रकृतस्य नन्दस्य शरीरं योगबलेन प्रविश्य मृतोत्थायेव तथैवाचचार मौर्य्यस्तु प्रकृतनन्दस्य दासीगर्भजः पुत्र इत्यतो यम् मौर्य्यम् आत्मजबुद्धेव शार्दूलपोतमिव परिपुष्य सान्वयः स्वोत्पादितैरष्टाभिः पुत्रैः सहित एव देवः योगानन्दः विनष्टः। तस्य मौर्य्यस्यैव मर्म अहं बुद्धिविशिखेन बुद्धिरूपशरेण भिनद्मि द्विधा करोमि यद्येतत् अदृश्यमानमसहमानं दैवं

ततः प्रविशति कञ्चुकी ।

कञ्चु । कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्म्मो मौर्य्य इव, क्रमेण, नगरे नीतः प्रतिष्ठां मयि ।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते, जेतुं न शक्नोति च(१) ॥

दृष्ट्वा । अयममात्यराक्षसः । परिक्रम्योपसृत्य च । अमात्य ! स्वस्ति भवते ।

राक्ष । आर्य्य ! जाजले ! अभिवादये । प्रियंवदक ! आसनमत्रभवत उपनय ।

प्रियं । एदं आसणं उपविसदु अज्जो (२) !

---

भाग्यं तस्य न वर्म्मीभवेत् सन्नाहो न भवेत् तथाच तस्य भाग्यवर्म्मैव मद्बुद्धिशरभेदनाद्रक्षणोपायो नान्य इति भावः ।

(१) चाणक्यनीत्या यथा, चाणक्यनयेनेव नन्दं योगानन्दमिव कामं विषयाभिलाषं प्रमथ्य अभिभूय नगर इव मयि क्रमेण मौर्य्य इव धर्म्मः प्रतिष्ठां स्थितिं नीतः । तथा च जरया विषयरागोऽभिभूयते धर्म्मस्च क्रमेण बर्द्धते इति लोकप्रसिद्धिः । राक्ष इव विषयस्यैव सेवया लब्धान्तरः लब्धावकाशः लोभः सम्प्रति इदानीं राक्षसवत् राक्षसेन तुल्यं जयाय तस्य धर्म्मस्याभिभवाय यतते किन्तु उपचीयमानं बर्द्धमानं धर्म्मं जेतुं न शक्नोति तथा च राक्षसो यथा मौर्य्यं जयाय यतते न च तं जेतुं शक्नोति तथा लोभोऽपि धर्म्मजयाय यतते न च धर्म्ममभिभवितुं शक्नोति जरायां धर्म्मबाहुल्यात् प्रसरन्नपि लोभो विषयवैराग्यात् न धर्म्मं जेतुं शक्नोतीत्यर्थः ।

(२) इदम् आसनम् उपविशतु आर्य्यः स० ।

कञ्चु। नाट्येनोपविश्य। अमात्य ! कुमारो मलयकेतुरमात्यं विज्ञापयति; चिरात्प्रभृत्यार्य्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम्। यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं(१)तथापि मद्विज्ञापनां मानयितुमर्हत्यार्य्यः। इत्याभरणानि दर्शयित्वा। अमात्य ! इमान्याभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुमर्हत्यार्य्यः।

राच। आर्य्य ! जाजले, विज्ञाप्यतां मद्वचनात् कुमारः, विस्मृता मया स्वामिगुणास्तव गुणपक्षपातिना। किन्तु

न तावन्निर्वीर्य्यैः परपरिभवाक्रान्तिकृपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम्॥
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे, हेमाङ्कं, नवर ! तव सिंहासनमिदम् (२)॥

कञ्चु। अमात्ये, त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः।

---

(१) उचितसंस्कारत्यागे हेतुं वर्णयन्नाह स्वामिगुणा इति स्वामिनो नन्दस्य ये दयादाक्षिण्यादयो गुणास्ते सहसा विस्मर्त्तुं न शक्यन्ते तत्स्मरणे च तदीयदुःखमात्मनि आरोप्य देहसंस्कारो नव क्रियते दुःखितस्य भूषायां प्रयत्नाभावादिति भावः।

(२) परेषां परिभवस्याक्रान्त्या कृपणानि दुःखितानि तैः अतएव निर्वीर्य्यैः वीर्य्यप्रकटनरहितैरेभिरङ्गैर्देहैः तावत्कालं प्रतनुम् अतिलघ्वीमपि संस्काररचनाम् देहमार्ज्जनाद्यलङ्करणादिरचनां न वहामि करोमि हे नवर ! नरश्रेष्ठ ! सुगाङ्गे सुष्ठु गाङ्गं गङ्गाजलं यत्र तादृशे नगरे पाटलिपुत्रे इति यावत् निःशेषं यथा तथा क्षयितं रिपुचक्रं रिपुसमुदायो यस्य तादृशस्य तव हेमाङ्कं स्वर्णचिह्नितं सिंहासनं यावत् न निहितं भवतीति शेषः तावत् न वहामीति योजना।

राक्ष। आर्य्य! कुमार इवानतिक्रमणीयवचनो भवानपि तदनुष्ठीयते कुमारस्याज्ञा।

कञ्चु। नाट्येन भूषणानि परिधाप्य। स्वस्ति भवते, साधयाम्यहम्(१)।

राक्ष। आर्य्य! अभिवादये।

कञ्चु। स्वनियोगं(२) साधयाम्यहमिति। सत्वरतो निष्क्रान्तः।

राक्ष। प्रियंवदक! ज्ञायतां कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति।

प्रियं। जं अज्जो आणवेदि त्ति। निष्क्रम्य आहितुण्डिकं दृष्ट्वा। णं अज्ज! को तुमं (३)।

आहि। भद्द! अहं क्खु आहितुण्डिओ, जिस्सविसो णाम, इच्छामि अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं (४)।

प्रियं। चिट्ठ, जाव अमच्चस्स णिवेदेमि। राक्षसमुपसृत्य। अज्ज! एसो क्खु सप्पोवजीवी इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं (५)।

---

(१) नाट्ये यामीत्यर्थे साधयामीति प्रयुज्यते। तथाच स्वकार्य्यसिद्धैर यामीत्यर्थः।

(२) नियुज्यते इति नियोगः कर्त्तव्यकर्म्म तं राज्ञा यत्र मां नियुक्तस्तत्कर्म्म साधयामि निष्पादयामीत्यर्थः।

(३) यदार्य्य आज्ञापयतीति। ननु आर्य्य! कस्त्वम् स०।

(४) भद्र! अहं खल्वाहितुण्डिको, जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुम् स०।

(५) तिष्ठ यावदमात्यस्य निवेदयामि। आर्य्य! एष खलु सर्पोपजीवी इच्छति सर्पैः अमात्यस्य पुरतः खेलितुम् स०।

राच। वामाक्षिस्पन्दं सूचयित्वा आत्मगतम्। कथं प्रथममेव सर्पदर्शनम्। प्रकाशम्। प्रियंवदक! न नः कूतूहलमस्ति सर्पदर्शने, तत्परितोष्य विसर्ज्जयैनम्।

प्रियं। जं अज्जो आणवेदि। निष्क्रम्य आहितुण्डकमुपसृत्य भद्द! एसो क्खु दे अमच्चो अदंसणेण [फलं देदि]। [पसादं करेदि] ण उण दंसणेण (१)।

आहि। भद्द! बिणवेहि मम वअणेण अमच्चं, न केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं; ता जइ मम दंसणेण अमच्चो पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं पसीददु त्ति (२)। पत्रमर्पयति।

प्रियं। पत्रं गृहीत्वा राचसमुपसृत्य। अमच्च! एसो क्खु आहितुण्डिओ बिणवेदि; ण केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं, ता जइ मे अमच्चो दंसणेण पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं पसीददु त्ति (३)।

राच। पत्रं गृहीत्वा वाचयति।

---

(१) यदार्य्य आज्ञापयति। भद्र! एष खलु ते अमात्योऽदर्शनेन फलं ददाति [पाठान्तरे प्रसादं करोति] न पुनर्दर्शनेन स०।

(२) भद्र! विज्ञापय मम वचनेनामात्यं, न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहं; तस्माद्यदि मे दर्शनेनामात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदत्विति।

(३) अमात्य! एष खल्वाहितुण्डिको विज्ञापयति; न केवलमहं सर्पोपजीवी, प्राकृतकविः खलु अहं; तस्माद्यदि मे अमात्यो दर्शनेन प्रसादं न करोति, तदा एतदपि तावत् पत्रकं वाचयितुं प्रसीदत्विति स०।

पाउण निरबसेसं, कुसुमरसं अत्तणो कुसलदाए।
जं उग्गिरदि भमरो तं, अण्णाणं कुणइ कज्जं (१)॥

राक्ष। आत्मगतम्। अये! कुसुमपुरवृत्तान्तज्ञोऽहं भवत्प्रणिधिस्त्वेति गाथार्थः, आः कार्यव्यग्रत्वान्मनसः, प्रभूतत्वाच्च प्रणिधीनां, विस्मृतम्, इदानीं स्मृतिरुपलब्धा, व्यक्तमाहितुण्डकच्छद्मना कुसुमपुरादागतेन विराधगुप्तेनानेन भवितव्यम्। प्रकाशम्। प्रियंवदक! प्रवेशयैनं, सुकविरेषः, श्रोतव्यमस्मात् सुभाषितम्।

प्रियं। जं अज्जो आणबेदि त्ति। आहितुण्डिकमुपसृत्य। उपसप्पदु अज्जो (२)।

आहि। नाट्येनोपसृत्यावलोक्य च स्वगतम्। अये! अयममात्यराक्षसस्तिष्ठति। संस्कृतमाश्रित्य। स एषः,

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना,
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः।

---

(१) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया।
यदुद्गिरति भ्रमरस्तदन्येषां करोति कार्यम् स०॥

आत्मनः कुशलतया कौशलेन निरवशेषं समग्रं कुसुमरसं पीत्वा भ्रमरो यदुद्गिरति तत् उद्गीर्यमाणं मधु अन्येषां कार्यं देवपैत्रादिकं कर्म्म करोति निष्पादयति अनेन आत्मकौशलेन सारग्राहितासाधर्म्म्येण भ्रमररूपेण मया कुसुमपुरवृत्तान्तोऽवसितः तच्छ्रवणे च मन्त्रियोक्तुर्विदितार्थतया कार्य्यनिश्चयो भविष्यतीति द्योतितम्।

(२) यदार्य्य आज्ञापयति उपसर्पतु आर्य्यः स०।

गाढालिङ्गनसङ्गपीडितसुखं यस्योद्यमाशङ्किनी,
मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीः स्तनम् (१)॥

प्रकाशम्। जअदु, जअदु, अमच्चो ! (२)।

राक्ष। विलोक्य। अये विराध ! इत्यर्द्धोक्ते (३) विरुद्धस्मृतिः। प्रियंवदक ! भुजङ्गैरिदानीं विनोदयामः, तद्विश्रम्यतां परिजनेन, त्वमपि स्वमधिकारमशून्यं कुरु।

प्रियं। जं अमच्चो आणवेदि त्ति (४)। सपरिवारो निष्क्रान्तः।

---

(१) मौर्य्यस्य अचिरराज्येऽभिषेकेण राक्षसात् प्रच्युतिशङ्कया राज्यश्रियः सम्पूर्णभावेन न तदाश्रयणमिति वर्णयितुमाह वामामित्यादि। वामां स्त्रीणां पुरुषवामभागे शयननियमात् वामभुजाया एव प्रथमं पत्युः कण्ठे दानौचित्यात् तथोक्तम्। बाहुलतेव तनुत्वात् दीर्घत्वाच्च। तां कण्ठे शिथिलं यथा तथा निवेश्य आसज्य यस्य राक्षसस्योद्यममाशङ्कते तथाभूता अतएव विवृत्तानना चकितस्य परावृत्य दर्शनोचितत्वात् परावृत्तमुखी श्रीः बलात् भयेनानारोपणे पत्यैव स्वयं हठात् स्कन्धे स्वस्कन्धे निहितया आरोपितयापि पतन्त्या पतनेन स्खलन्त्या दक्षिणया बाहुलतयेत्यर्थात् हेतुभूतया तदर्पणेनैव गाढ़ालिङ्गनसम्भवात्। गाढ़ालिङ्गनं दृढ़ालिङ्गनं तदेव सङ्गः संश्लेषस्तेन यत् पीड़ितं पीड़नं स्तनस्येर्यात् तेन सुखं यस्य वामेतरस्तनस्य तं वामेतरं स्तनं मौर्य्यस्य चन्द्रगुप्तस्योरसि वक्षःस्थले नाद्यापि कुरुते भीतायाः गाढ़ालिङ्गनासम्भवात् एतेनाद्यापि चन्द्रगुप्ते राज्यश्रीर्भृशं नानुरक्ता तत्र राक्षसयत्नात् पुनराकर्षणभयमेव कारणमिति ध्वनितम्। स एष इति गद्यस्थः यस्येत्यनेन विशेषितः।

(२) जयतु जयतु अमात्यः स०।

(३) आहितुण्डिकच्छद्मना प्रणिधितया प्रेषितस्य विराधगुप्तस्य प्रियंवदकसमीपे नामोच्चारणे मन्त्रप्रकाशनं स्यादित्यर्द्धोक्ते तस्य गोपनाय प्रियंवदकं प्रति छलेन ततोऽपसारणमिति द्रष्टव्यम्।

(४) यदमात्य आज्ञापयतीति।

राक्ष । सखे ! विराधगुप्त ! इदमासनमास्यताम् ।

विरा । यदाज्ञापयत्यमात्य इति । नाट्येनोपविष्टः ।

राक्ष । सखेदं निर्व्वर्ण्य । अहो देवपादपद्मोपजीविनो जनस्येयमवस्था इति । रोदिति ।

विरा । अमात्य ! अलं शोकेन, नातिचिरादमात्योऽस्मान् नूनं पुरातनीमवस्थामारोपयिष्यति ।

राक्ष । सखे विराधगुप्त ! वर्णयेदानीं कुसुमपुरवृत्तान्तम्

विरा । अमात्य ! विस्तीर्णः कुसुमपुरवृत्तान्तस्तदाज्ञापय कुतः प्रभृति कथयामि ।

राक्ष । सखे ! चन्द्रगुप्तस्य तावन्नगरप्रवेशात्प्रभृति, मत्प्रणिधिभिः [मत्प्रयुक्तैः] तीक्ष्णरसदायिभिः किमनुष्ठितमित्यादितः श्रोतुमिच्छामि ।

विरा । एष कथयामि । अस्ति तावच्छकयवनकिरातकाम्बोजपारसीकवाह्लीकप्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चन्द्रगुप्तपर्व्वतेश्वरबलैरुदधिभिरिव, प्रलयकालचलितसलिलसञ्चयैः, समन्तादुपरुद्धं कुसुमपुरम् ।

राक्ष । शस्त्रमाकृष्य ससम्भ्रमम् । मयि स्थिते, कः कुसुमपुरमवरोत्स्यति प्रवीरक ! प्रवीरक ! क्षिप्रमिदानीम्—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम् ।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु, मया सहैकमनसो, येषामभीष्टं यशः (१) ॥

(१) वृत्तवृत्तान्तस्याखिलत्वेन श्रुता राक्षसस्योत्साहातिशयात्तत्कालोचितकार्य्यकरणायाधिकारिणो नियोगं वर्णयति । प्रकारानिति ।

विरा। अमात्यालमावेगेन ; वृत्तमिदं वर्ण्यते।

राच। कथं वृत्तमिदम् ; मया पुनर्ज्ञातं स एव कालो वर्त्तत इति। शस्त्रमुत्सृज्य सास्रम्।। हा देव! नन्द! स्मरति ते राक्षसः प्रसादानां यस्त्वेवंविधे काले—

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र यायाद्-

देतत्पारिप्लवाम्भःप्लुति तुरगबलं धार्य्यतां राक्षसेन।

---

प्राकारान् प्राचीरान् परितः शरासनधरैः धानुष्कैः क्षिप्रं क्षेपणीयम् आशुगामि वा अस्त्रं परिक्षिप्यताम् तत्क्षेपणे हि शत्रूणां प्रवेशासम्भवात् तथोपदेशः। अत्र श्लोके क्षिप्रमिति पदं न क्रियाविशेषणं तस्य गद्यस्थेन क्षिप्रमितिपदेन प्रत्येकक्रियायामनुषञ्जनीयेन पुनरुक्तत्वापत्तेः। परेषां शत्रूणां द्विपानां हस्तिनां घटायाः समूहस्य भेदक्षमैः द्विरदैः हस्तिभिः द्वारेषु स्थीयतामनेनापि शत्रुप्रवेशासम्भवाय तथोपदेशः। एवं स्वदुर्गरक्षामुपदिश्य आत्मना सह बलनिर्गममुपदिशति मुक्त्वेत्यादि भीरूणां रणप्रवेशासम्भवादाह मृत्युभयं मुक्त्वा परित्यज्य दुर्बले स्वपक्षात् हीनबले तथोक्तिरुत्साहवर्द्धनार्था। शत्रोर्बले सैन्ये प्रहर्तुमनसः प्रहर्त्तुकामाः मया राक्षसेन सह अस्वामिनः निरुत्साहतावारणाय मया सहेत्युक्तम् एकमनसः तुल्यचित्ताः सन्तः एतच्च विशेषणं, स्वामिनो विनाशेऽपि यथा स्वामिभक्त्यनुसारेण मया प्रयत्यते एवं मया तुल्यरूपाः प्रवर्त्तन्तामिति दर्शनाय। ते निर्यान्तु के ते इत्याह येषां यशः कीर्त्तिरेवाभीष्टम् स्वामिमरणेऽपि युद्धादौ प्रवृत्तिर्न स्वामिसन्तोषायापि तु यशोर्थायेति भावः।

(१) यत्र रणप्रदेशे एषा मेघ इव नीला श्यामला गजघटा हस्तिसमूहस्तिष्ठतीति शेषः तत्र राक्षसो यायात् युद्धाभिमुखीभूय गच्छेत् पारिप्लवाम्भश्चञ्चलजलम् उत्तरङ्गनीरमिवेति यावत् प्लुतिः प्लवनं गतिभेदो यस्य तादृशमेतत् विपक्षस्थं तुरगबलमश्वरूपं सैन्यं राक्षसेन धार्यतां वार्य्यतामित्यर्थः। राक्षसः पत्तीनां पदातीनामेतत् बलम् अन्तं नयतु नाशयतु [अन्तरिति पाठे पत्तीनां परकीयपदातीनामन्तर्मध्ये बलं स्वबलं

पत्तीनां राक्षसोऽ(न्तं न)[न्तर्नं]यतु बलमिति प्रेषयन्मह्यमाज्ञा-
मज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम्(१)॥

ततस्ततः।

विरा। ततः समन्तादुपरुद्धं पुष्पपुरमवलोक्य, बहुदिव-
सप्रभृति महदुपरोधवैशसमुपरि पौराणां परिवर्त्तमानम-
सहमाने, तस्यामवस्थायां, पौरजनापेक्षया, सुरङ्गामुपेत्यापक्रान्ते तपोवनाय देवे सर्व्वार्थसिद्धौ, स्वामिविरहात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु, जयघोषणाज्या(व्या)घातादिसाहसानुमितान्तर्नगरवासिषु (१) पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गामधिगतेषु युष्मासु, चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्व्वतेश्वरे।

राक्ष। सखे! पश्याश्चर्य्यम्।

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता,
हन्तुं शक्तिरिवार्ज्जुनं बलवती, या चन्द्रगुप्तं मया।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्व्वतनृपं तद्बध्यमेवावधीत् (२)॥

---

सैन्यं नयतु प्रवेशयतु] इत्येवं नानाकार्य्ये मह्यं मामुद्दिश्य प्रेषयन् हे देव! स्नेहयोगात् प्रीतिहेतोः इह नगरे राक्षसानां सहस्रं स्थितं सहस्रराक्षसात्मकत्वेन माम् अज्ञासीः सम्भावितवान् मामामितकार्य्यकरत्वशक्त्या राक्षससहस्रात्मकत्वमुत्प्रेक्षसे इत्यर्थः वर्त्तमानसामीप्ये लुङ्।

(१) जयघोषणाज्याघातादिरूपं यत् साहसं सहसा बलेन कार्य्यं तदनुमितं [पाठान्तरे जयघोषणाया अव्याघातादिभिः साहसमनुमितं] यैः निष्ठान्तस्य परनिपातः। तादृशेषु अन्तर्नगरवासिषु सत्सु।

(२) एकपुरुषव्यापादिनी एकपुरुषघातिनी कर्णेनेव मया अर्जुनमिव चन्द्रगुप्तं हन्तुं बलवती कृतसामर्थ्या शक्तिरिव इन्द्रदत्तशक्तिनामास्त्र

विरा । अमात्य ! दैवस्यात्र कामचारः ; किमत्र क्रियते ।

राच । ततस्ततः ।

विरा । ततः पितृवधपरित्रासादपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते च पर्व्वतकभ्रातरि वैरोध(च)के, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेन आहूयाभिहिताः कुसुमपुरनिवासिनः सर्व्वे एव सूत्रधाराः, यथा सांवत्सरिकवचनादद्यैवार्द्धरात्रसमयएवाभिमतश्चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः प्रथमद्वारात्प्रभृति संस्क्रियतां राजभवनमिति, ततः सूत्रधारैरभिहितं, आर्य्य ! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुपलभ्य, सूत्रधारेण दारुवर्म्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजद्वारम् ; इदानीमस्माभिरभ्यन्तरे संस्कारो विधेय इति । ततश्चाणक्यवटुना, अनादिष्टेनैव दारुवर्म्मणा संस्कृतं राजभवनद्वारमिति परितुष्टेन, दारुवर्म्मणः सुचिरं

---

विशेष इव या विषाङ्गना विषकन्या रचिता स्थापिता सा विषकन्या विष्णोः केशवस्येव विष्णुगुप्तहतकस्यानुमत्येति शेषः आत्यन्तिकश्रेयसे अत्यन्तोपकाराय अर्जुनस्येव चन्द्रगुप्तस्येत्यर्थात् हैड़िम्बेयं हिड़िम्बागर्भजातं भैमिं घटोत्कचमिव पर्व्वतन्टपमेत्य प्राप्य तद्वध्यं तस्य परिपणितराज्यार्द्धदानभीरोः चाणक्यस्यैव वध्यं छलेन हननीयमबधीत् । सहज कवचकुण्डलादानेन एकपुरुषघातिनी शक्तिरिन्द्रेण कर्णाय दत्तेति, वनपर्व्वोक्ता, रात्रियुद्धे अतिविक्रममाणो घटोत्कचोऽन्यास्त्रेणावार्य्यतया तयैव शक्त्या कर्णेन हत इति द्रोणपर्व्वोक्ता कथा चात्रानुसन्धेया ।

दाक्ष्यमभिनन्द्याभिहितम्, अचिरादस्य दाक्ष्यस्यानुरूपं फलं दारुवर्म्माधिगमिष्यति।

राक्ष। सोद्वेगम्। सखे! कुतश्चाणक्यबटोः परितोषः, अफलमनिष्टफलं वा दारुवर्म्मणः प्रयत्नमवगच्छामि। यदनेन बुद्धिमोहात्, अथ वा राजभक्तिप्रकर्षात्, [नियोग] काल-मप्रतीक्षमाणेन, सञ्जनितश्चाणक्यवटोश्चेतसि बलवान् विकल्पः। ततस्ततः

विरा। ततश्चाणक्यहतकेनानुकूललग्नवशादर्द्धरात्र-समये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, शिल्पिनः पौरांश्च गृहो[तार्थान्]तत्समयान् कृत्वा, तस्मिन्नेव क्षणे पर्व्वते-श्वरभ्रातरं वैरोध[च]कमेकासने चन्द्रगुप्तेन सहोपवेश्य, कृतः पृथ्वीराज्यार्द्धभागः।

राक्ष। किञ्चातिसृष्टं[ष्टः] पर्व्वतेश्वरभ्रात्रे वैरोध[च]काय पूर्व्वप्रति श्रुतं (तः) राज्या[र्द्धभागः]र्द्धमिति।

विरा। अमात्य! अथ किम्।

राक्ष। आत्मगतम्। नियतमतिधूर्त्तवटुना तस्यापि तप-स्विनः कमप्युपांशु(१)बधमाकलय्य पर्व्वतेश्वरविनाशजनितस्या-यशसः परिहारार्थमेषा लोकप्र [सिद्धिः] तिपत्ति (२) रुपच-रिता। प्रकाशम्। ततस्ततः

विरा। ततः प्रथममेव प्रकाशीकृते चन्द्रगुप्तस्यार्द्धरात्रे

---

(१) उपांसुबधं रहस्यहननम्।

(२) लोकेषु प्रसिद्धिः प्रख्यापना प्रतिपत्तिरिति पाठे लोकानां निश्चयः।

नन्दभवनप्रवेशे, कृताभिषेके च वैरोध(च)के, हिमविमलमुक्ता-गुणपरिक्षेपोपरचितपटुवारवाणप्रच्छादितशरीरे(१), मणि-मयमुकुटपटुबन्धनिविड़नियतरुचिरतरमौलौ, सुरभिकुसुम-दामवैकक्षिकावभासितवक्षःस्थले(२), परिचितदर्शनैरप्यनभि-ज्ञायमाने, नृपाकृतौ (३), चाणक्यहतकस्याज्ञया चन्द्रगुप्तोप-वाह्यां(४) चन्द्रलेखाभिधानां नागवशा(५)मारुह्य, चन्द्रगुप्ता-नुयायिना (६) राजलोकेनानुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोध(च)के, युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्म्मणा, चन्द्रगुप्तोऽयमिति मन्यमानेन; वैरोध(च)क-स्योपरि निपातनाय सज्जीकृतं यन्त्रतोरणम्। अत्रान्तरे, बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना बर्ब्बरकेण, कनकदण्डान्त-र्निहितामसिपुत्रिकामाकष्टुकामेनावलम्बिता करेण, कनक-शृङ्खलामुखावलम्बिनी कनकदण्डिका।

---

(१) हिम इव विमलः शुभ्रः यो मुक्तागुणः मुक्ताहारस्तस्य परि-क्षेपेणोपरचितो यो वारवाणः वर्म्म तेन प्रच्छादितं शरीरं यस्य एतेन वैरोधकस्यानभिज्ञानं न भविष्यतीति तथोक्तम्।

(२) सुरभि सुगन्धि कुसुमदाम यत्र तादृशेन वैकक्षिकेण यज्ञोप-वीतवत्तिर्य्यग्लम्बिना हारेण अवभासितं विपुलं वक्षःस्थलं यस्य।

(३) नृपाकृतौ चन्द्रगुप्ताकारे तथात्वेनाभिज्ञायमाने इत्यर्थः।

(४) चन्द्रगुप्त उपवाह्यो यस्याः। चन्द्रगुप्तवाहनभूतामित्यर्थः।

(५) नागवशां हस्तिनीमित्यर्थः पोटायुवतीत्यादिना परनिपातः।

(६) चन्द्रगुप्तानुयायिनेत्युक्तिश्चन्द्रगुप्तभ्रमसम्पादनार्थम्।

राक्ष । उभयोरप्यस्थाने यत्नः । ततस्ततः ;

विरा । अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती(१), ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन भ्रष्टलक्ष्यं, पतता यन्त्रतोरणेनाकृष्टकृपाणीको व्यग्रपाणिरनासाद्यैव चन्द्रगुप्तप्रत्याशया वैरोध(च)कं, दारुवर्म्मणा हतस्तपस्वी वर्ब्बरकः । ततो दारुवर्म्मणा, यन्त्रतोरणपातमात्मविनाशफलमवधार्य्य शीघ्रमेवोत्तुङ्गतोरणस्थानमारूढेन, यन्त्रघटनबीजलोहकीलकमादाय, हस्तिनीगत एव हतस्तपस्वी वैरोध(च)कः ।

राक्ष । हा कष्टमनर्थद्वयमापतितम् । न हतश्चन्द्रगुप्तोऽसौ, हतौ वैरोध(च)कवर्ब्बरकौ । सावेगमात्मगतम् । नैतावुभौ हतौ, दैवेन वयमेव हताः । प्रकाशम् । अथ स सूत्रधारो दारुवर्म्मा क्व ?

विरा । वैरोध(च)कपुरःसरैः पदातिलोकैर्लोष्टघातं (२) हतः ।

राक्ष । सास्रम् । कष्टं भो कष्टं अहो वत्सलेन सुहृदा दारुवर्म्मणा वियुक्ताः स्मः । अथ, तेन तत्र भिषजा अभयदत्तेन किमनुष्ठितम् ?

विरा । अमात्य ! सर्व्वमनुष्ठितम् ।

राक्ष । सहर्षम् । अपि नाम सखे, हतश्चन्द्रगुप्तहतकः ?

---

(१) आरूढवती प्राप्तवती ।

(२) लोष्टैर्हत्वा लोष्टघातं हन्तेः णमुल् । हतः नाशितः । कषादिषु यथाविध्यनुप्रयोगानुशासनात् द्विर्हन्तेः प्रयोगः ।

विरा। अमात्य! दैवाद्धतः॥

राक्ष। सविषादम्। तत्किमिदानीं कथयसि परितुष्टः सर्व्वमनुष्ठितमिति?

विरा। अमात्य! कल्पितमनेन विषचूर्णमिश्रमौषधं चन्द्रगुप्ताय। तच्च प्रत्यक्षीकुर्व्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपगतमुपलभ्याभिहितश्चन्द्रगुप्तः; वृषल! वृषल! सविषमौषधं, न पातव्यमिति।

राक्ष। शठःखल्वसौ वटुः। अथ स वैद्यः कथम्।

विरा। स खलु वैद्यस्तदेवौषधं पायित उपरतश्च।

राक्ष। सविषादम्। अहह, महान्विज्ञानराशिरुपरतः। भद्र, अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम्।

विरा। आत्मविनाशः।

राक्ष। सोद्वेगम्। कथमिव?

विरा। स खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य, महता व्ययेनोपभोक्तुमारब्धवान्। ततः कुतोऽयं भूयान् धनागमस्त्वेति पृच्छ्यमानोऽयं, यदा वाक्यभेदान् बहूनकथयत् तदा चाणक्यहतकादेशाद्विचित्रेण बधेन व्यापादितः(१)।

राक्ष। सोद्वेगम्। कथमत्रापि वयमेवोपहता दैवेन। अथ, शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्त्तुमस्मत्प्रयुक्तानां नरपति शयनगृहस्यान्तःसुरङ्गायां निवसतां, बीभत्सकादीनां, को वृत्तान्तः?

विरा। अमात्य, दारुणो वृत्तान्तः!

---

(१) बधेन बधसाधनेन व्यापादितः मारितः।

राक्ष । सावेगम् । कथं दारुणो वृत्तान्तः ? न खलु (१) विदितास्ते तत्र निवसन्तश्चाणक्यहतकेन ।

विरा । अथ किम् ?

राक्ष । कथमिव ?

विरा । प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेणैव शयनगृहे चाणक्येन दुरात्मना समन्तादवलोकिते, ततस्तेकस्माद्भित्तिच्छिद्रात्, [गृहीतभक्तावयवानां पिपीलिकानां पङ्क्तिम्] * अवलोक्य, पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन, दाहितं तदन्तः शयनगृहम् । तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टिविषयाः प्रथममपिहित[निर्गमनमार्गमनधिगम्य] †, सर्व्वएव बीभत्सादयस्तत्रैव ज्वलनमुपगता उपरताश्च ।

राक्ष । सास्रम् । सखे, पश्य, चन्द्रगुप्तस्य दैवसम्पदा सर्व्व एव उपरताः । सचिन्तम् । सखे, दैवसम्पदं पश्य दुरात्मनश्चन्द्रगुप्तहतकस्य । कुतः ।

कन्या तस्य बधाय या विषमयी गूढं प्रयुक्ता मया,
दैवात् पर्व्वतकस्तया विनिहतो, यस्तस्य राज्यार्द्धभाक् ।
ये यन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः ;
मौर्य्यस्यैव फलन्ति, पश्य, विविधश्रेयांसि मे नीतयः (२) ॥

---

* [गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकाम्] इति पाठान्तरम् ।

† [मनुपगम्य द्वारम्] इति पाठान्तरम् ।

(१) न खलु समुदायः प्रश्नार्थव्यञ्जकः । विदिताः किमित्यर्थः ।

(२) तैर्मन्त्रविषैरेव ते दारुवर्म्मादयः हताः अतो मम नीतयः

विरा। अमात्य ! तथापि प्रारब्धमपरित्याज्यमेव। पश्य-त्वमात्यः ;

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति(१)॥

अपि च।

किं शेषस्य भरव्यथा न वपुषि, क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपते,रास्ते न यन्निश्चलः।
किं त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते,
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् (२)।

---

उपायाः मौर्य्यस्य चन्द्रगुप्तस्येव विविधश्रेयांसि मङ्गलानि फलन्ति जन-यन्ति मत्कृतोपायैः विषकन्यादिभिस्तदीयानिष्टनिवारणादित्यर्थः।

(१) नीचैर्विघ्नभयेन न खलु नैव प्रारभ्यते। नोद्युज्यते मध्याः पुनः विघ्नेन निहताः प्रतिहताः सन्तः विरमन्ति आरब्धकार्य्यादिति शेषः। उत्तमगुणास्तु विघ्नैः पुनः पुनः प्रतिहन्यमाना अपि त्वमिव प्रारब्ध-मुद्वहन्ति समापयन्तीत्यर्थः।

(२) शेषस्यानन्तनागस्य वपुषि देहे भरव्यथा पृथिवीधारण जन्या व्यथा किं न भवति अपि तु भवत्येव यत् येन भरेण पीड़ितः सन् एष क्ष्मां न क्षिपति तादृशभारसत्त्वेऽपि न तस्याः क्षेपो यत् क्रियते तत्राङ्गीकृतापरित्याग एव कारणमिति भावः। दिनपतेः किं परि-श्रमो नास्ति यत् परिश्रमेण निश्चलः सन् न आस्ते। भारे परिश्रमे च सत्यपि तत्तत्कार्य्यं न यत् करोति तत्र हेतुं वर्णयन्नर्थान्तरं न्यस्यति श्लाघ्यो जनः अङ्गीकृतं वस्तु कृपणवत् क्षुद्रेण तुल्यमुत्सृजन् लज्जते प्रतिपन्नवस्तुषु अङ्गीकृतपदार्थेषु निर्वाहः यथापूर्व्वं समापनं यत् तदेतत् सतां साधूनां गोत्रव्रतम् हि कुलोचितं व्रतं खलु नियतधर्म्म इत्यर्थः।

राक्ष । सखे ! प्रारब्धमपरित्याज्यमिति प्रत्यक्षमेतद्भवतः । ततस्ततः ।

विरा । ततः प्रभृति चाणक्यहतकश्चन्द्रगुप्तस्य शरीरे, सहस्रगुणमप्रमत्तः, एभ्य एव ईदृशं भविष्यतीति, अन्विष्य-अन्विष्य-निगृहीतवान् कुसुमपुरनिवासिनो नन्दामात्य-पुरुषान् ।

राक्ष । सावेगम् । वयस्य ! अथ के के निगृहीताः ?

विरा । अमात्य ! आदावेव तावत् क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्व्वासितः ।

राक्ष । आत्मगतम् । एतावत् सह्यं, न निष्परिग्रहं(१) स्थानपरिभ्रंशः पीडयिष्यति । प्रकाशम् । सखे, कमपराधमुद्दिश्य निर्व्वासित एषः ?

विरा । एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्व्वतेश्वरं घातितवानिति ।

राक्ष । स्वगतम् । साधु कौटिल्य ! साधु ।

परिहृतमयशः पातितमस्मासु च, घातितोऽर्द्ध राज्यहरः ।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव (२) ॥

प्रकाशम् । ततस्ततः

विरा । ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन (३) व्यापारिता

---

(१) विषयासक्तिरहितं तेन गृहशून्यता तं न दुःखाकरोतीत्यर्थः

(२) अयशः पर्व्वतेश्वरबधजन्यमयशः स्वकीयमस्मासु पातितं सङ्क्रामितञ्च यस्य तव एकमपि एकप्रयत्नसाध्यं क्षपणकनिर्वासनप्रयासेन साध्यं नीतिबीजं नीतिरूपबीजं कार्य्यहेतुः बहुफलतामेति ।

(३) अनेन शकटदासेन व्यापारिताः नियोजिताः ।

दारुणकर्म्मादिय इति नगरे प्रख्याप्य, शकटदासः शूलमारोपितः ।

राच । सास्त्रम् । हा सखे ! शकटदास ! अयुक्तस्तवायमीदृशो मृत्युः । अथवा, स्वाम्यर्थमुपरतो न शोच्यस्त्वमसि, वयमेवात्र शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

विरा । अमात्य, मैतदेवं ; स्वाम्यर्थ एव साधयितव्यः ।

राच । सखे,

अस्माकममुमेवार्थमवलम्ब्य जिजीविषा ।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते (१) ॥

विरा । अमात्य ! नैतदेवं (२) । अस्माकममुमेवार्थमित्यादि पुनः पठति ।

राच । सखे, कथ्यतां ; अपरस्यापि सुहृद्व्यसनशतस्य श्रवणे सज्जा वयम् ।

---

(१) अमुं स्वामिसंबन्धिनमर्थं वैरनिर्यातनरूपं प्रयोजनमेवावलम्ब्य उद्दिश्य अस्माकं जिजीविषा जीवनेच्छा अतोऽस्माभिः कृतघ्नैःतन्मरणाननुगामित्वेन कृतोपकारानभिज्ञैः सद्भिः परलोकगतो देवो न अनुगम्यते नानुम्रियते इत्यर्थः ।

(२) राचसप्रयुक्तवाक्यस्यार्थान्तरत्वं दर्शयितुं विराधगुप्त आह नैतदेवमिति एतत् भवत्प्रयुक्तं श्लोकात्मकं वाक्यमेवम् एतदर्थं न किन्त्वन्यार्थकमित्यतः तत्पद्यं पुनः पठन्नर्थान्तरपरतां द्योतयति । स चार्थ इत्थं पूर्व्वार्द्धं प्राग्वत् कृतघ्नैः तत्कृतोपकारविस्मारकैरिव देवो नानुगम्यते ये उपकारिणां प्रयोजनमनभिसम्पाद्य म्रियन्ते ते कृतघ्ना एव अतः कृतघ्नैरिवास्माभिर्नानुगम्यते इत्यर्थः ।

विरा । ततएतदुपलभ्य, चन्दनदासेनोपरूढसाध्वसेनापवाहितममात्यकलत्रम् ।

राक्ष । सखे ! क्रूरस्य चाणक्यवटोर्विरुद्धमनुष्ठितं चन्दनदासेन ।

विरा । अमात्य, नन्वयुक्ततरः सुहृद्द्रोहः ।

राक्ष । ततस्ततः ;

विरा । ततो, याच्यमानेनापि यदा न समर्पितमनेनामात्यकलत्रं ततः कुपितेन चाणक्यवटुना,

राक्ष । स खलु व्यापादितः, ।

विरा । अमात्य, न खलु व्यापादितः, किन्तु गृहीतगृहसारः सपुत्त्रकलत्रः संयस्य, बन्धनागारे निक्षिप्तः ।

राक्ष । ततः किं परितुष्टः कथयसि, अपवाहितमनेन राक्षसकलत्रमिति ; ननु वक्तव्यं, संयतः सकलत्रो राक्षसः (१) इति ।

प्रविश्य पटाक्षेपेण(२) पुरुषः । जअदु, जअदु, अज्जो ! अज्ज ! एसो क्खु सअड़दासो पडिहारभूमिमुवत्थिदो (३) ।

राक्ष । प्रियंवदक ! अपि सत्यम् ?

---

(१) तद्बन्धनेनैव सकलत्रोऽहं बद्धः सुहृदोरुभयोरभिन्नहृदयत्वादित्यर्थः ।

(२) पटाक्षेपेण कार्य्यस्य शीघ्रतार्थमितरकर्तृकजवनिकापटक्षेपमन्तरेणैव स्वयमेव पटाक्षेपणं कृत्वैव ।

(३) जयतु जयतु आर्य्यः, आर्य ! एष खलु शकटदासः प्रतिहारभूमिमुपस्थितः स० । प्रतिहारभूमिं द्वारदेशम् ।

प्रियं । अलिअं किं अमच्चपादोपजीविणो मन्तिदुं जाणन्ति (१) ।

राक्ष । सखे, विराधगुप्त ! किमेतत् ।

विरा । अमात्य, रक्षति खलु भव्यं भवितव्यता ।

राक्ष । प्रियंवदक, यद्येवं तत्किं चिरयसि ? क्षिप्रं प्रवेशय तम् ।

प्रियं । जं अमच्चो आणवेदि त्ति (२) । निष्क्रान्तः ।

ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः ।

शक । दृष्ट्वा आत्मगतम् ।

दृष्ट्वा मौर्यमिव प्रतिष्ठितपदं शूलं धरित्रीतले
तल्लक्ष्मीमिव चेतसः [ना] प्रमथिनीमुन्मुच्य वध्यस्रजम् ।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाघाततूर्य्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः (३) ॥

---

(१) अलीकं किम् अमात्यपादोपजीविनो मन्त्रयितुं जानन्ति स० ।

(२) यदमात्य आज्ञापयति इति स० ।

(३) धरित्र्या भूमेस्तले भूमावित्यर्थः मौर्य्यं चन्द्रगुप्तमिव प्रतिष्ठितपदं प्राप्तप्रतिष्ठं स्थापितमूलञ्च शूलं दृष्ट्वा, तल्लक्ष्मीं तस्य मौर्य्यस्य लक्ष्मीमिव चेतसोऽन्तःकरणस्य पाठान्तरे चेतनाया बुद्धेः प्रमाथिनीं वध्यस्रजं वध्यचिह्नभूतां मालामुन्मुच्य परिधाय, स्वामिनो नन्दस्य उपरोधेन हिंसनेनेव रौद्रान् उग्रान् विषमान् दुःश्रव्यान् आघाततूर्य्यस्वनान् कार्य्यख्यापनपूर्व्वकमाहन्यमानस्य घोषणावाद्यरूपतूर्य्यस्य ध्वनीन् श्रुत्वा मदीयं मनः खण्डितं दर्शनादिकं मनःकर्त्तृकतयोपचर्य्यते । यन्न ध्वस्तं नष्टं तन्मन्ये प्रथमाभिघातेन स्वामिवधरूपताड़नाप्राप्त्या कठिनमिति न ध्वस्तमिति मन्ये लोके हि किञ्चित् वस्तु भूयो भूय आहतं सत् कठिनं भवतीति प्रसिद्धम् । अतः काठिन्यान्न ध्वंस्तमिति भावः ।

नाट्येनावलोक्य सहर्षम् । अयममात्यराक्षसस्तिष्ठति य एषः,

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन् ।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः (१) ॥

उपसृत्य । जयत्यमात्यः !

राक्ष । नाट्येनावलोक्य सहर्षम् । सखे शकटदास ! दिष्ट्या कौटिल्यगोचरगतोऽपि दृष्टोऽसि, तत्परिष्वजस्व माम् ।

शक । तथा करोति ।

राक्ष । तं परिष्वज्य । इदमासनमास्यताम् ।

शक । यदाज्ञापयत्यमात्यः । इति नाट्येनोपविष्टः ।

राक्ष । सखे शकटदास ! अथ कोऽयमस्य मे हृदयानन्दस्य हेतुः ।

शक । सिद्धार्थकं निर्दिश्य । अमात्य ! प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य, वध्यस्थानादपवाहितोऽस्मि ।

राक्ष । सहर्षम् । भद्र ! सिद्धार्थक ! काममपर्य्याप्तमिदमस्य प्रियस्य; तथापि गृह्यताम् । इति स्वगात्रादवतार्य्य भूषणानि (२) प्रयच्छति ।

सिद्धा । गृहीत्वा पादयोर्निपत्य स्वगतम् । एदं क्खु अज्जोव-

---

(१) नन्दे क्षीणेऽपि अक्षीणभक्तिः पूर्ब्ववत्तुल्यभक्तिरित्यर्थः इह पृथिव्याम् भूमौ स्वामिभक्तानां परमे प्रमाणे उदाहरणे स्थितः एष इति पदं पद्यस्यमत्रान्वेति ।

(२) भूषणानि मलयकेतुना प्राक् दत्तानि । तेन तद्भूषणानां लेखपत्रसहभावेन सिद्धार्थकेन स्थापनादुत्तरत्र लेख्यस्य सत्यतायाः प्रचुरकारणसम्पत्तिर्भविष्यतीत्यनुसन्धेयम् ।

देसेण करिस्सं। प्रकाशम्। अमच्च ! एत्थ मे पढमप्पविट्टस्स णत्थि कोवि परिचिदो, जहिं एदं अमच्चस्स प्पसादं णिक्खिविअ निव्वुदो भविस्सं; ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्स ज्जेव भाण्डागारे णिक्खिविदुं, जदा मे एदिणा पओअणं भविस्सदि, तदा गेह्निस्सं (१)!

राच। भद्र! भवतु, को दोषः [भारः]। शकटदास! एवं क्रियताम्।

शक। यदाज्ञापयत्यमात्य इति। मुद्रां विलोक्य जनान्तिकम् (२)। अमात्य! भवन्नामाङ्कितेयं मुद्रा।

राच। विलोक्य सविषादं सवितर्कमात्मगतम्। कष्टं मदुत्कण्ठाविनोदार्थं नगरान्निष्क्रामतो मम हस्ताद् ब्राह्मण्या गृहीता। तत् कथमस्य हस्तमुपगता। प्रकाशम्। भद्र! सिद्धार्थक! कुतस्त्वयेयमधिगता।

---

(१) इदं खलु आर्यशापदेशेन करिष्यामि। अमात्य! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः, यत्र मम अमात्यस्य प्रसादं निक्षिप्य निर्वृतो भवामि; तस्मादिच्छाम्यहं एतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे निक्षेप्तुम्; यदा ममैतेन प्रयोजनं भविष्यति तदा ग्रहीष्यामि स०। आर्यस्य चाणक्यस्य उपदेशेन आदेशेन प्राक् प्रदर्शितेन इदं पारितोषिकग्रहणं करिष्यामि। एतया प्राकृतकवेः यमपटदर्शिनः सकाशात् चाणक्येनाधिगतया मह्यं दत्तया, मुद्रया राक्षसनामाङ्कितया अङ्गुरीयकमुद्रायन्त्रेण।

(२) जनान्तिकं तु तत्प्रोक्तं यत्तृतीयाद्यगोचर इति। त्रिपताकं करं कृत्वा त्वायुक्तलक्षणं वा साहि० द० परि०।

सिद्धा । अमच्च ! अत्थि कुसुमपुरणिवासी मणिआरसेट्ठी चन्दनदासो णाम, तस्स गेहदुआरे भूमिए पड़िदा, मए समासादिदा [लद्धा] (१) ।

राक्ष । युज्यते ।

सिद्धा । अमच्च, किं एत्थ जुज्जदि ? (२) ।

राक्ष । भद्र ! यतो महाधनानां द्वारि पतितस्यैवंविधस्योपलब्धिरिति (३) ।

शक । सखे ! सिद्धार्थक ! अमात्यनामाङ्कितेयं मुद्रा, तदितो बहुतरेणार्थेन भवन्तममात्यस्तोषयिष्यति, तद्दीयतामेषा मुद्रा ।

सिद्धा । अज्ज ! एसो मे परितोषो, जं अमच्चो इमाए मुद्दाए परिग्गहप्पसादं करोदि त्ति (४) । मुद्रां समर्पयति ।

---

(१) अमात्य ! अस्ति कुसुमपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम तस्य गेहद्वारे निपतिता मया समासादिता स० । पाठान्तरे लब्धा ।

(२) अमात्य ! किमत्र युज्यते स० ? युज्यते इति राक्षसवाक्यं श्रुत्वा संशयानः पृच्छति किं एत्थ जुज्जति इति ।

(३) शकटदासं प्रति, स्वकलत्रस्य तत्र स्थितिकाले चन्दनदासगृहद्वारे मुद्रिकापतनं भवितुमर्हतीत्यभिप्रायेण उक्तमपि युज्यते इति वाक्यं, सिद्धार्थकं प्रति निगूहनार्थमन्यथार्थपरतया कथयन्नाह यतो महाधनानामिति ।

(४) आर्य ! एष मे परितोषो, यदस्या मुद्राया अमात्यः परिग्रहप्रसादं करोतीति स० ।

राक्ष। सखे शकटदास! अनयैव मुद्रया स्वाधिकारे व्यव-हर्त्तव्यं भवता।

शक। यदाज्ञापयत्यमात्य इति।

सिद्धा। अमच्च! बिणबेमि किं पि (१)।

राक्ष। भद्र! विश्रब्धं ब्रूहि।

सिद्धा। जाणादि ज्जेव अमच्चो, जधा चाणक्कहदअस्स बिप्पिअं करुअ, णत्थि मे पुणो पाड़लिउत्ते प्पबेसो त्ति; ता इच्छामि अहं अज्जस्स ज्जेव सुप्पसण्णे पादे [चलणे] सेबिदु (२)।

राक्ष। भद्र! प्रियं नः, किन्तु त्वदभिप्रायपरिज्ञानेनान्त-रितोऽस्माकमनुनयः। तदेवं क्रियताम्।

सिद्धा। सहर्षम्। अणुग्गहिदोह्मि (४)।

राक्ष। सखे शकटदास! विश्रामय सिद्धार्थकम्।

शक। यदाज्ञापयत्यमात्य इति। सिद्धार्थकेन सह निष्क्रान्तः।

राक्ष। सखे विराधगुप्त! वर्णयेदानीं कुसुमपुरवृत्तान्त-शेषम् अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापं (४) चन्द्रगुप्तप्रकृतयः!

---

(१) अमात्य! विज्ञापयामि किमपि स०।

(२) जानात्येवामात्यो, यथा चाणक्यहतकस्य विप्रियं कृत्वा नास्ति मे पुनः पाटलिपुत्त्रे प्रवेश इति; तस्मादिच्छाम्यहं अमात्यस्यैव सुप्रसन्ने चरणे सेवितुम् स०। पाठान्तरे सुप्रसन्नौ पादाविति स०।

(३) अनुगृहीतोऽस्मि इति स०।

(३) अस्मदुपजापं अस्मत्प्रयुक्तप्रणिधिद्वारा कृतं सम्पादितम् उप-जापं परस्परभेदनं क्षमन्ते सहन्ते तत्र न विरक्ता इत्यर्थः।

विरा। अमात्य! वाढं (१) ह्यमन्ते, ननु यथाप्रधानमनुगच्छन्त्येव।

राक्ष। सखे! किं तत्र (२) कारणम्?

विरा। अमात्य! इदं तत्र कारणं; मलयकेतोरपक्रमणात् प्रभृति [पीड़ितश्चन्द्रगुप्तेन चाणक्य इति]*; चाणक्योऽपि जितकाशितयाऽसहमानस्तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतसः पीड़ामुपचिनोति; अयमपि ममानुभवः।

राक्ष। सहर्षम्। सखे विराधगुप्त! तद्गच्छ त्वमनेनाहितुण्डिकच्छद्मना पुनः कुसुमपुरमेव, तत्र हि मे सुहृद्वैतालिकव्यञ्जनः स्तनकलसो नाम प्रतिवसति, स त्वया मद्वचनाद्वाच्यः; यथा चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तस्त्वया समुत्तेजनरूपैः श्लोकैरुपश्लोकयितव्य इति। कार्य्यञ्चातिनिभृतं करभकहस्तेन सन्देष्टव्यमिति।

विरा। यदाज्ञापयत्यमात्य इति। निष्क्रान्तः।

---

* [कुपितश्चन्द्रगुप्तश्चाणक्यस्य] पाठान्तरम्।

(१) वाढमित्युक्ताङ्गीकारस्य द्योतकमव्ययम्। ह्यमन्ते इत्यत्र प्रागुक्तवाक्यस्थमुपजापमितिपदं कर्म्मतयान्वेति। न केवलं ह्यमन्ते ननु किन्तु तमुपजापमनुगच्छन्ति अनुसरन्त्येव परस्परभेदरूपं तत्तत्कार्य्यमनुभवन्त्येवेत्यर्थः। न केवलं प्रकृतय एव किन्तु प्रधानादयो राजामात्यादयोपीत्याह यथाप्रधानं प्रधानं राजा चन्द्रगुप्तः सचिवश्चाणक्यश्च तमनतिक्रम्य तावपि परस्परभेदमनुभवतः किं पुनस्तदुपकरणभूताः पुरुषा अनुभवन्तीत्यर्थः।

(२) प्रधानयोः राजामात्ययोर्भेदे कारणं पृच्छति किं पुनरिति तत्र परस्परभेदे।

प्रविश्य पुरुषः। जअदु जअदु अमच्चो! अमच्च! सअड़-दासो विण्णवेदि, एदे क्खु तिण्णि अलङ्कारविसेसा विक्कीअन्ति, ता पच्चक्खीकरेदु अमच्चो (१)।

राक्ष। विलोक्यात्मगतम्। अहो महार्हाण्याभरणानि! प्रकाशम्। भद्र! उच्यतां शकटदासः, परितोष्य विक्रेतारं, गृह्यतामिति।

पुरु। जं अमच्चो आणवेदि त्ति (२)। निष्क्रान्तः।

राक्ष। स्वगतम्। यावदहमपि कुसुमपुराय करभकं प्रेषयामि। उत्थाय। अपि नाम दुरात्मनश्चाणक्यहतकात् चन्द्रगुप्तो भिद्येत, अथवा सिद्धमेव समीहितं पश्यामि। कुतः

मौर्य्यस्तेजसि सर्व्वभूतलभुजामाज्ञापको वर्त्तते,
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः।

---

(१) जयतु जयतु अमात्यः। अमात्य! शकटदासो विज्ञापयति एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तस्मात् प्रत्यक्षीकरोत्वमात्य इति स०। एतदलङ्कारविक्रेतारश्च चाणक्यप्रणिधयः ते च चाणक्योपदेशेन हतपर्व्वतेश्वराङ्गयोजितालङ्कारत्रयं राक्षससमीपे विक्रेतुमागताः तच्च क्रीत्वा स्वशरीरे राक्षसेन धृत्वा मलयकेतोः समीपे यास्यते तद्दृष्ट्वा चाग्रे दर्शयिष्यमाणः राक्षसेन मलयकेतोर्भेदो भविष्यति तथा लेख्यपत्रे लिखितस्य पत्रस्यास्थ्यन्यतार्थमित्यादिकभागस्य एतदलङ्कारत्रयेण सुसंवादिता भविष्यतीत्यतः राक्षससमीपे तद्विक्रयणमिति द्रष्टव्यम्।

(२) यदमात्य आज्ञापयति इति स०।

राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं,
सौहार्द्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति(१) ॥

इति निष्क्रान्ताः सर्व्वे ।

इति द्वितीयोऽङ्कः ।

---

(१) स्वस्वप्रयोजनमुद्दिश्यैव सर्व्वे इतरानपेक्षन्ते एतौ च चाणक्यचन्द्रगुप्तौ राज्यप्राप्त्या प्रतिज्ञापूरणेन च कृतकृत्याविति न तयोरितरेतरापेक्षास्तीति भेदः सुखेन भवितुमर्हतीत्याह मौर्य्य इत्यादि । आज्ञापकः शासकः अयं चन्द्रगुप्तः । जातस्मयः जातगर्व्वः मयैवायं राज्येऽभिषिक्त इत्यतोऽस्याज्ञाभङ्गेऽपि नायं मम किञ्चित् कर्त्तुं शक्ष्यतीत्यभिमाने कारणम् । एकं चन्द्रगुप्तम् । अपरं चाणक्यम् । कृतकृत्यता कृतार्थता एतयोरिति शेषः लब्धान्तरा प्राप्तावकाशा "कृतार्थौ नापसर्पती"त्युक्तेः सौहार्दात् मित्रभावात् भेत्स्यति पृथक् करिष्यति एतौ परस्परं भेदयिष्यतीत्यर्थः ।

# मुद्राराक्षसम् ।

## तृतीयोऽङ्कः ।

ततः प्रविशति कञ्चुकी ।

कञ्चु ।

रूपादीन्विषयान्निरूप्य करणैर्यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः ।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे,
न्यस्तं मूर्ध्नि पदं तवैव जरया, तृष्णे ! मुधा माद्यसि (१) ॥

---

(१) हे तृष्णे ! त्वया यैः करणैरिन्द्रियैर्विषयान् शब्दादीन् निरूप्य परिच्छिद्य अवबुध्येत्यर्थात् आत्मकर्त्तृकस्याप्यवबोधस्य तृष्णाकर्त्तृकत्वमिहोपचर्यते । आत्मलाभः स्ववृत्तिप्राप्तिः सत्तया स्थितिरिति यावत् लब्धः कृतः विषयध्यानेनैव तृष्णाया उत्पत्तेः शास्त्रे भूरिशोदर्शितत्वात् । वासं वसतीत्यादिवदेकस्य लभेरिह व्यापारार्थकत्वधात्वर्थपरता । तेन नानन्वयः । सम्प्रतीत्यर्थात् जरायां तेष्वपि आत्मलाभोपायेष्वपि चक्षुरादिषु इन्द्रियेषु स्वार्थावबोधक्रियाः स्वस्वविषयग्रहणरूपव्यापारा हताः नष्टाः जरायामिन्द्रियाणां सम्यग्बोधाभावस्य लोकसिद्धत्वात् । एवं ज्ञानेन्द्रियाणामपाटवमुक्त्वा तत्प्रयोज्यानां कर्म्मेन्द्रियाणामपि अपाटवमाह अङ्गानीति । मम आज्ञाविधेयानि अन्यदा वशीभूतान्यपि अङ्गानि हस्तपदा-

परिक्रम्याकाशे। भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः, सुगृहीतनामा(१)देवश्चन्द्रगुप्तो वः समाज्ञापयति। यथा, प्रवृत्त कौमुदीमहोत्सवरमणीयतरं कुसुमपुरमवलोकयितुमिच्छामि, तत् क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्योपरि भूमय, इति, तत् किं चिरयन्ति भवन्तः। आकाशे आकर्ण्य। किं ब्रूथ आर्य्य! किमविदित एवायं देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेध इति? आः दैवोपहताः, किमनेन वः प्राणहरेण कथोद्घातेन(२)। शीघ्रमिदानीम्।

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रज
सं'पूर्णेन्दुमयूखसंहतिरुचां सच्चामराणां श्रियः।
सिंहाङ्कासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम्(३)।

---

दीनि प्रसभं हठात् पटुतां स्वस्वकार्य्यादानगतिभोजनादिषु सामर्थ्यं त्यजन्ति किमु वक्तव्यम् तवैव मूर्द्ध्नि मस्तके जरया पदं न्यस्तमर्पितम् तथा च सर्व्वथैव तव कामाभावात् त्वं मुधैव मिथ्यैव फलं विनैव वरीवृध्यसे विषयभोगार्थमेव तृष्णा जायते विषयभोगश्च इन्द्रियपाटवमन्तरेण दुर्घट इत्यतो जरायां तृष्णा विफलैवेत्यर्थः।

(१) "स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते" इत्युक्तेः प्रातःस्मरणीयनामेत्यर्थः।

(२) कथाप्रस्तावेन। राजानभिमतविषयत्वेन तस्य प्राणदण्डफलकत्वात् प्राणहरत्वम्।

(३) संपूर्णेन्दुमयूखसंहतिरुचाम् पूर्णचन्द्रकिरणसंघतुल्यकान्तीनां सचामराणां श्रियः शोभाः पिनद्धस्रजः धृतमाल्यान् गृहीतधूपसुरभीन्

आकाशे। किं कथयन्ति भवन्तः? एते त्वरामह इति!
भद्रास्त्वरध्वं अयमागतएवचन्द्रगुप्तः, यएषः।

सुविश्लिष्टैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्येणोढा गुरुरपि भुवो याऽस्य गुरुणा।
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात् स्खलति, न च दुःखं वहति च(१)।

नेपथ्ये। इतइतो देवः।

---

घृतधूपसौरभान् स्तम्भान् आलिङ्गन्त तथाच स्तम्भान् धूपसौरभान्वितान् विधाय माल्यभूषितान् कृत्वा शुभचामरान्वितान् शोभार्थं कुरुतेति नियोगः। सुचिरं सन्ततं सिंहाङ्कासनधारणात् सिंहचिह्नितासनस्य राजसिंहासनस्य धारणात् अथ च सिंहेन स्वाङ्करूपं यदासनं तत्र धारणात् संजातमूर्च्छां बहुभारधारणात् सिंहभीतेश्च प्राप्तमूर्च्छावस्थामिव गां भूमिं सौरभेयीञ्च सकुसुमः कुसुमेन सहितः चन्दनवारिणा सेकः क्षिप्रमनुगृह्णातु यथा सिंहेन क्रोड़धारणात् प्राप्तमूर्च्छा काचित् स्त्री चन्दनसेकादिना आश्वास्यते एवं बहुभारसिंहासनधारणात् श्रान्ता भूमिः चन्दनवारिसेकेन आश्वास्यतामिति भावः।

(१) विषमेषु उच्चावचेषु दुरवगाह्येषु च तेन स्खलनयोग्येष्वपि पथिषु मार्गेषु राजनीत्यादिषु च अचलता धैर्य्यमासेदुषा धुर्य्येण धुरं वोढुं शक्तेन प्राप्तदम्यावस्थेन च अस्य चन्द्रगुप्तस्य गुरुणा जनकेन प्रकृतनन्देन चन्द्रगुप्तस्य मुरायां प्रकृतनन्देनैवोत्पादात्। भुवो भूमेर्या गुरुः गुर्व्वी अपि धूर्भारश्चिन्ता च सुविश्लिष्टैः अचञ्चलैर्विश्लिष्टैश्च अङ्गैः स्कन्धादिभिः अमात्यादिभिश्च सह चिरम् ऊढा धृता। नवे वयसि तामेव उच्चैर्धुरं भारं चिन्तां च वोढुं व्यवसितः उद्युक्तः दम्यत्वात् दम्यभावप्राप्तेः न स्खलति च्यवते स्वकार्य्यात् नापराध्यति नापि दुःखं वहति। बहु-परिश्रमवाह्यभारस्य वहने श्रमावश्यं भावेऽपि अस्य न तत्र खेदः नापि स्खलनमिति भावः।

ततः प्रविशति राजा प्रतीहारी च।

राजा। स्वगतम्। राज्यं हि नाम राजधर्म्मानुवृत्तिपर तन्त्रस्य भूपतेर्म्महदप्रीतिस्थानम्। यतः।

परार्थानुष्ठाने जडयति नृपं स्वार्थपरता,
परित्यक्त [क्तान्यार्थो]स्वार्थो नियतमयथार्थः क्षितिपतिः।
परार्थश्चेत् स्वार्थादभिमततरो, हन्त परवान्,
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः(१)॥

---

(१) प्रजापालनरूपराजधर्म्मानुवृत्तौ तदायत्तस्य नृपतेर्न सुखं 'सर्व्वं परवशं दुःख'मिति मनूक्तेरित्याह परार्थेति स्वार्थपरता स्वाभीष्टायत्तता नृपं परार्थानुष्ठाने कर्त्तव्ये अपरजनप्रयोजननिर्वाहाय जड़यति स्तब्धं करोति, किं स्वार्थं परार्थं वा सम्पादयामीत्यत्र सन्देहात् निश्चलमिव करोतीत्यर्थः। अथ "सर्वः स्वार्थं समीहते" इत्युक्तेः स्वार्थपरः सन् प्रवर्त्ततां किं परार्थानुष्ठानेनेत्यत्राह परित्यक्तेत्यादि परित्यक्तान्यार्थः परित्यक्तः अनादृतः परिजिहीर्षित इति यावत् अन्यार्थः परार्थो येन तादृशः क्षितिपतिः अयथार्थः क्षितेः पालनकर्तृत्वेनैवास्य यथार्थनामता तत्त्यागे तु अयथार्थनामैवेत्यर्थः पाठान्तरे क्षितिपतिः क्षितिपतिशब्दः परित्यक्तः स्वार्थः क्षितिपालनकर्त्तृत्वरूपोऽवययार्थो येन तादृशः अयथार्थः मिथ्याभूतः। तेन नोद्देश्यविधेयोरैक्यदोषः। तथाच क्षितिपतिना स्वार्थं परित्यज्य परार्थे एव प्रवर्त्तितव्यामित्याशयः। एवञ्च परार्थं एव राज्ञां स्वार्थात् स्वाभीष्टादभिमततरः अत्यन्तः प्रियः इत्येव मन्तव्यम् एवञ्च नृपस्तर्हि परवान् परार्थप्रवृत्तिमत्त्वेन पराधीनः। एवं यदि स परायत्तः तर्हि कथमिव कथङ्कारं प्रीतेः सुखस्य रसमास्वादं वेत्तु करोतु रसवेदनयोस्तुल्यार्थत्वेनैकस्य वेदनस्येह कृत्यर्थकता।

अपिच। दुराराध्या हि राजलक्ष्मीरात्मवद्भिरपि(१) राजभिः।
कुतः।

तीक्ष्णादुद्विजते, मृदौ, परिभवत्रासान्न सन्तिष्ठते,
मूर्खान् द्वेष्टि, न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि,।
शूरेभ्योऽप्यधिकं बिभे,त्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्य्या भृशम्(२)।

अन्यच्च। कृतककलहं कृत्वा, स्वतन्त्रेण च त्वया कञ्चित्
कालं व्यवहर्त्तव्यमित्यार्य्योपदेशः; स च कथमपि मया पातकमिवाभ्युपगतः, अथ वा शश्वदार्य्योपदेशसंस्क्रियमाणमतयः
सदैवास्वतन्त्रा वयम्। कुतः।

इह हि रचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते,
त्यजति तु यदा मार्गं मोहात्तदा गुरुरङ्कुशः।
विनयरुचयस्तस्मात्सन्तः सदैव निरङ्कुशाः,
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः(३)।

---

(१) आत्मवद्भिर्जितेन्द्रियैरपि किंपुनरजितेन्द्रियैः।

(२) तीक्ष्णात् उग्रात्, मृदौ शान्तप्रकृतिके अविक्रान्ते इति यावत् अत्यन्तविद्वत्सु विद्यायामेव तेषामनुरागात् विरागकारणमिति बोध्यम्। लब्धप्रसरा क्रमशः प्राप्तप्रतिष्ठा वेशवनिता वेश्येव दुःखोपचर्य्या दुःखेन सेवनीया यथा तीक्ष्णतादयो दोषा एकान्तविद्वत्तादयश्च गुणा न भवेयुस्तथा राज्ञा लक्ष्मीस्थैर्य्याय यतितव्यमिति भावः।

(३) मोहात् कर्त्तव्याकर्त्तव्याविवेकात् यदा मार्गं कर्त्तव्यपथं त्यजति शिष्य इत्यनुषज्यते तदा गुरुः अङ्कुशः तत्र गतिनिरोधकास्त्रविशेषतुल्यः। तस्मात् विनये रुचिर्येषां तादृशाः सन्तः सदैव निरङ्कुशाः

प्रकाशम् । आर्य्य ! वैहीनरे ! सुगाङ्ग(१)प्रासादमार्गमादेशय ।

कञ्चु । इतइतो देवः ।

राजा । परिक्रामति ।

कञ्चु । परिक्रम्य । अयं सुगाङ्गप्रासादः शनैरारोढुमर्हत्यार्य्यः ।

राजा नाट्येनारुह्य दिशोऽवलोक्य । अहो शरत्समयसंभृतशोभाविभूतीनां दिशामतिरमणीयता । कुतः ।

शनैः शान्ता भूताः सितजलधरच्छेदपुलिनाः,
समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः,
चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदै
र्नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः(२) ।

---

निरोधशून्याः, अतः कारणात् खातन्त्र्येभ्यः साधीनताभ्यः परतरं अत्यन्तदूरं यथा तथा वयं पराङ्मुखाः भवेम ।

(१) सुसन्निहितं गाङ्गं यत्र तादृशस्य तन्नामकस्य वा प्रासादस्य मार्गं गमनपथम् । पूर्वत्रापि सुगाङ्गे हेमाङ्गमित्यत्रापि सुगाङ्गशब्दस्य प्रासादनामपरत्वेन तन्नामके प्रासादे इत्यर्थो द्रष्टव्य इति केचित् ।

(२) सितजलधरच्छेदा जलहीनतया धवलमेघखण्डाः पुलिनानीव यस्यास्ताः शनैः क्रमशः वर्षापगमात् शान्ता निर्मला विगतकालुष्याः भूता जाताः कलविरुतिभिः मधुराव्यक्तध्वनियुक्तैः सारसकुलैः । दिक्सरितोरुभयत्र समावेशसम्भवेन नोपमानान्तरापेक्षा । समन्तादाकीर्णा व्याप्ताः । निशि रात्रौ चित्राकारैर्विचित्ररूपैः विकचानि प्रफुल्लानि नक्षत्राणि कुमुदानीव तैश्चिता व्याप्ताः दीर्घाः मेघापवरणाभावात् दीर्घतायुक्ता दश दिशः नभस्तः सरित इव स्यन्दते प्रादुर्भवन्ति निःसरन्ति चेत्यर्थः ।

अपिच ।

अपामुद्वृत्तानां निजमुपदिशन्त्याः स्थितिपथं,
दधत्या शालीनामवनतिमुदारे सति फले ।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो
कृतः कृत्स्नस्यायं विनयइव लोकस्य शरदा(१) ॥

अपिच ।

भर्त्तुस्तथा कलुषितां बङ्गवल्लभस्य
मार्गे कथञ्चिदवतार्य्य तनूभवन्तीम् ।
सर्व्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम्(२) ॥

(१) उद्वृत्तानां प्रवृद्धानाम् प्राप्तावर्त्तानाम् अतिक्रान्तमर्य्यादानामिति ध्वनिः अपां जलानां निजं स्वाभाविकं स्थितिपथम् स्वस्थानस्थिति मार्गं मर्य्यादाञ्च स्वाभाविकं स्थानमिति ध्वनिः उपदिशन्त्या नियोजयन्त्या उदारे महति फले शस्ये विद्यादिफले च सति शालीनामवनतिं नम्रताम् विनीतताञ्च दधत्या उग्रं तीक्ष्णं विषं गरलमिव मयूराणां मदं गर्व्वं हरन्त्या शरदा कृत्स्नस्य सकलस्य लोकस्य भुवनस्य विनय इव कृतः। अचेतनानामपि जलानाम् अल्पचेतनानामपि शालीनां, मयूराणाञ्च तत्तद्दोषापकरणात् सर्व्वेषामेव विनयः शरदा कालेन कृत इवेत्युत्प्रेक्षा ।

(२) बङ्गवल्लभस्य बङ्गनदीस्वामित्वात् बङ्गकान्तस्य भर्त्तुः स्वामिनः पत्युश्च तथा तेन रूपेण चरितेन च तुल्यं कलुषिताम् अप्रसन्नाम् ईर्ष्यादिदोषग्रस्ताम् तनूभवन्तीं वर्षापगमेन तद्दुःखेन च अत्यन्ततनीयसीम् कृशाङ्गीञ्च गङ्गां नारीञ्चेति ध्वनिः मार्गे स्वखातप्रदेशे मर्य्यादायाञ्च कथञ्चित् कष्टेन तैस्तैः प्रबोधनवाक्यैः अवतार्य्य स्थापयित्वा प्रसन्नां कृत्वा

समन्तान्नाट्येनावलोक्य । अये, कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरं पश्यामि ? आर्य्य ! वैहीनरे ! अथ त्वयास्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः ।

कञ्चु । देव ! अथ किम् ? आघोषितो देवस्याज्ञया कुसुमपुरे कौमुदीमहोत्सवः ।

राजा । आर्य्य ! तदेवं किं न परिगृहीतमस्मद्वचनं पौरजनेन ?

कञ्चु । कर्णौ पिधाय । देव, शान्तं पापं, शान्तं पापं, पृथिव्यामस्खलितपूर्व्वं देवस्य शासनं, कथं पौरेषु स्खलितुमर्हति ?

राजा । आर्य्य ! वैहीनरे ! तत् कथमप्रवृत्तकौमुदीमहोत्सवमद्यापि कुसुमपुरं पश्यामि । पश्य ।

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्व्वेशनार्य्यो
नालंकुर्व्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः ।
अन्योन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्व्वणं पौरमुख्याः(१) ॥

कञ्चु । देव ! एवमेतत् (२) ।

---

रतिकथाचतुरा दूतीव शरत् सिन्धुपतिं सिन्धुं समुद्रं पतिमिव समुद्रतुल्यगम्भीरं पतिं वा नयति आभिमुख्येन प्रापयति अनुकूलयति च ।

(१) स्वामिनः गृहस्वामिनः पार्व्वणं पर्व्वसमयोचितं महोत्सवयोग्यं विधिं व्यापारं न भजन्ते नानुतिष्ठन्ति ।

(२) एतत्-कौमुदीमहोत्सवाननुष्ठानं यथावर्णितं महाराजेन तद् एवमेव तथैव ।

राजा। किमेतत् (१)।

कञ्चु। देव! अत इदम्(२)।

राजा। आर्य्य! स्फुटमभिधीयताम्।

कञ्चु। देव! प्रतिषिद्धः कौमुदीमहोत्सवः।

राजा। सक्रोधम्। आर्य्य! आः केन?

कञ्चु। नातः परमस्माभिर्देवो विज्ञापयितुं शक्यते।

राजा। न खलु आर्य्येण चाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीयश्चक्षुषो विषयः?

कञ्चु। देव! कोऽन्यो जीवितुकामो देवस्य शासनमुल्लङ्घयिष्यति?

राजा। शोणोत्तरे! उपवेष्टुमिच्छामि।

प्रती। देव! एदं सिंहासणं, उपविसदु देवो (३)।

राजा। नाट्येनोपविश्य। आर्य्य! वैहीनरे! आर्य्यचाणक्यं द्रष्टुमिच्छामि।

कञ्चु। यदाज्ञापयति देवइति। निष्क्रान्तः।

ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां
चिन्तां नाटयंश्चाणक्यः॥

चाण। आत्मगतम्। कथं स्पर्द्धते मया सह दुरात्मा राक्षसहतकः। कुतः।

---

(१) एतत् कौमुदीमहोत्सवाननुष्ठानं किम्, कस्मात् किंहेतुकमित्यर्थः।

(२) अतः वक्ष्यमाणात् चाणक्येन प्रतिषेधरूपात् हेतोरिदम् तदननुष्ठानम्।

(३) देव! एतत् सिंहासनम् उपविशतु देवः स०।

कृतागाः कौटिल्यो भुजग इव निर्याय नगरा-
द्यथा नन्दं हत्वा नृपतिमकरोत् मौर्य्यवृषलम् ।
तथाहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेष व्यवसितः (१) ॥

प्रत्यक्षवदाकाशे लक्ष्यं बध्वा । राक्षस ! राक्षस ! विरम्यतामस्माद्दुर्व्यवसितात् (२) ।

उत्सिक्तः कुसचिवदृष्टराज्यतन्त्रो,
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।
चाणक्यस्त्वमपि च नैव केवलं ते
साधर्म्यं मदनुकृतेः प्रधानवैरम् (३) ॥

---

(१) भुजग इव कृतमागः अग्रासनान्निष्कासनरूपोऽपराधो यस्य नन्देनेत्यादि तादृशः कौटिल्यश्चाणक्यः नगरान्निर्य्याय निर्गत्य नन्दं हत्वा यथा मौर्य्यं नृपतिं राजानमकरोत् अपराधशोधनरूपं वैरनिर्य्यातनं चकार । तथाहं राक्षसोऽपि मौर्य्येन्दोश्चन्द्रगुप्तस्य श्रियमपहरामीति कृता धीर्मतिर्निश्चयो येन तथाभूत एष राक्षसः मद्बुद्धेः प्रभावं महिमानमतिशयितुमतिक्रमितुं व्यवसितः उद्युक्तः ।

(२) दुष्टं दुःसाध्यत्वेनासद्विषयं व्यवसितमुद्यमस्तस्मात् मौर्य्येन्दोः श्रियोऽपहरणरूपोद्योगात् विरम्यताम् ।

(३) चन्द्रगुप्तश्रीहरणस्य दुःसाध्यत्वं दर्शयितुं नन्दस्य राज्यभ्रंशे कारणं दर्शयन्नाह । असौ नन्दो यथा उत्सिक्तः गर्व्वितः कुसचिव दृष्ट-राज्यतन्त्रः कुमन्त्रिभिर्भवादृशैर्दृष्टं राज्यतन्त्रं राज्यपदं यस्य तादृशश्च एष चन्द्रगुप्तो न भवति । अस्मादृशसुसचिवदृष्टराज्यतन्त्रोऽगर्वितश्चैव इत्यर्थः । गर्वकुसचिवदृष्टराज्यतन्त्रत्वयोः राज्यभ्रंशकारणत्वात् नन्दस्य

विचिन्त्य। अथ वा, नातिमात्रमस्मिन् वस्तुनि मया मनः खेदयितव्यम्। कुतः;

मद्भृत्यैः किल नाम पर्व्वतसुतो व्याप्तः प्रतिष्ठान्तरै-
रुद्युक्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः।
कृत्वा संप्रति कैतवेन कलहं मौर्य्येन्दुना, राक्षसं
भेत्स्यामि स्वमतेन, भेदकुशलो ह्येष प्रतीपं द्विषः (१)॥

प्रविश्य। कञ्चुकी। कष्टा खलु सेवा नाम। कुतः।

---

तत्सत्त्वेपि चन्द्रगुप्तस्य तदभावात् न भंशसम्भव इति भवदुद्यमः दुःसाध्यत्वेन दुष्ट एवेति भावः। किञ्च संकल्पितविषयनिष्पादनं महाप्रभावान्वितेनैव कर्त्तुं शक्यं तव तु तथात्वाभावात् न तत्सिद्धिरित्याह चाणक्य इत्यादि। चाणक्य इत्यात्मनामकथनेन आत्मनो महामहिमत्वं सूचितम्। तथा च चाणक्यः सङ्कल्पितविषयं साधयितुं शक्तः महाप्रभाव-त्वात् न त्वमिति भावः। उभयोः सौसादृश्यम् नास्तीति दर्शयन्नाह साधर्म्म्यमिति महावैरमेवोभयोः सौसादृश्यं नापरमित्यात्मनो महा-महिमत्वज्ञापनयैव इतरसौसादृश्याभावो दर्शितः।

(२) मद्भृत्यैः भागुरायणादिभिः प्रतिष्ठान्तरैः मत्कृता प्रतिष्ठा आज्ञा अन्तरे येषां तथाभूतैः सद्भिः मलयकेतुर्व्याप्तः विशेषेणाप्तः मया यथाज्ञाप्तं तथास्थितैस्तैः परिवृत इत्यर्थः। सिद्धार्थकादयश्च स्पशाभूताः नियोगस्य मदादिष्टविषयस्य साधनविधौ निष्पादनविषये उद्युक्ताः उद्यताः। उपदिष्टकार्य्यं च मलयकेतोः राक्षसस्य भेदनं तच्चोपरिष्टात्-व्यक्तीभविष्यति। सम्प्रति च कैतवेन अन्यथास्थितस्य वस्तुनोऽन्यथारूप-तया ख्यापनरूपेण छलेन मौर्य्येन्दुना चन्द्रगुप्तेन सह कलहं विवादं कृत्वा भेदकुशलोहं स्वमतेन हि स्वबुद्ध्यैव प्रतीपम् प्रतिकूलम् राक्षसं द्विषः मलयकेतोः सकाशात् भेत्स्यामि।

भेतव्यं नृपते,स्ततः सचिवतो, राज्ञस्ततो वल्लभा,
दन्येभ्य, श्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायास्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः(१) ॥

परिक्रम्यावलोक्य च । इदमार्य्यचाणक्यस्य गृहं, यावत् प्रविशामि । नाट्येन प्रविश्यावलोक्य च । अहो राजाधिराज मन्त्रिणो गृहभूतिः (२) । कुतः ;

उपलशकलमेतद्भेदकं गोमयानां
वटुभिरुपहृतानां वर्हिषां स्तोममेतत् ।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् (३) ॥

---

(१) राजराजसचिवादीनां भयोत्पादकत्वेन सेवाधर्म्मं कुक्कुरवृत्तितुल्यतया निन्दति भेतव्यमिति । प्रकृते च राजसचिवात् चाणक्यात् कौमुदीमहोत्सवप्रतिषेधस्य राजसमीपे मङ्क्षु स्वयं कथनात् तच्छ्रवणे तस्य कोपो भविष्यतीत्याशङ्क्येयं खेदोक्तिरिति द्रष्टव्यम् । राज्ञोभवने लब्धप्रसादाः लब्धानुग्रहा ये विटाः धूर्त्तादयोवसन्ति तेभ्योऽपि भेतव्यमित्यनुषङ्गः एवं सर्वत्र । दैन्यात् दीनभावात् क्षुद्रप्रकृतित्वात् दर्शने राज्ञः प्रसाददर्शने उन्मुखाय । भावप्रधाननिर्देशः । आनुकूल्याय अपलपनैः काकूक्तिभिः पिण्डार्थं ग्रासाद्यर्थमायास्यतः प्रयतमानस्य जनस्य लाघवकारिणीं सेवां कृतधियः पण्डिताः श्ववृत्तिं विदुः जानन्ति इति स्थाने उचितमेवेत्यर्थः ।

(२) गृहभूतिः गृहैश्वर्यं सोपहासोक्तिरियम् राजाधिराजमन्त्रिणो वक्ष्यमाणगृहसंस्थानानौचित्यात् ।

(३) एतत् उपलशकलम् प्रस्तरखण्डं गोमायानां भेदकं प्राकारोपरि शोषणार्थं विस्तीर्णानि गोमयानि निर्भिद्योपलखण्डं प्रकाशते

ततः स्थाने खल्वस्य वृषलो देवश्चन्द्रगुप्त इति (१)। कुतः।

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः,
प्रवाचः कार्पण्यादवितथवाचोऽपि कृतिनः।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा,
निरीहाणामीशस्तृणमिव तिरस्कारविषयः (२)॥

विलोक्य सभयम्। तदयमार्य्यचाणक्यस्तिष्ठति।

यो नन्दमौर्य्यनृपयोः परिभूय लोक
मस्तोदयौ प्रतिदिशन्नविभिन्नकालम्।
पर्य्यायपातितहिमोष्णिम सर्व्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः (३)॥

---

इत्यर्थः। शरणं गृहं शुष्यमाणाभिराभिः समिद्भिर्विनमतिपटलान्तं अतिशयेन नमितच्छदिप्रान्तं जीर्णकुड्यं दृश्यते इति।

(१) वृषलः मुराागर्भजः चन्द्रगुप्तः अस्य चाणक्यस्य देवः राजा इति यत् खलु तत् स्थाने उचितमेव वृषलस्य कार्य्याकार्य्यविवेकाभावात् नास्य दैन्यापहारकत्वमिति भावः।

(२) राजसेवनं तृष्णाहेतुकमेव तृष्णयैव हि राज्ञोऽसतो गुणस्य कीर्त्तनाय प्रवर्त्तन्ते इति दर्शयन् सेवाधर्म्मं निन्दति। स्तुवन्तीति। प्रवाचः सुवचना विद्वांसः अश्रान्तास्याः अनवरतगुणकथने श्रमरहित-मुखाः सन्तः अभूतैः अविद्यमानैरपि गुणैः क्षितिपतिं, स्तुवन्तिव कृतिनो-ऽपि कार्पण्यात् दीनत्वात् अवितथवाचो मिथ्यावादरचनातत्परा भवन्ति इति च यत् स सकलोऽपि आरोपितगुणकीर्त्तनमिथ्यावचनादिरूपः व्यापारः तृष्णाया धनाशायाः प्रभावः इतरथा धनाशाभावे निरीहाणां धनाशा-शून्यानाम् ईशः प्रभुर्धनी तृणमिव तिरस्कारविषयः अनादरास्पदम्।

(३) यश्चाणक्यः लोकं भूपतिसैन्यं भुवनञ्च परिभूय तिरस्कृत्य परि-ताप्य च नन्दमौर्य्यनृपयोरभिन्नकालम् एकदैव अस्तोदयौ नाशवृद्धी

जानुभ्यां भूमौ निपत्य । जयतु जयत्वार्य्यः ।

चाण । नाट्येनावलोक्य । वैहीनरे ! किमागमनप्रयोजनम् ।

कञ्चु । आर्य्य, प्रणतिसंभ्रमसमुच्चलितभूमिपालमौलिमणि सकलशिखापिशङ्गीकृतपादपद्मयुगलः, पादपद्मयोरार्य्यं प्रणिपत्य देवश्चन्द्रगुप्तो विज्ञापयति, क्रियान्तरमन्तरायमन्तरेणार्य्यं (१) द्रष्टुमिच्छामीति ।

चाण । वृषलो मां द्रष्टुमिच्छति ; वैहीनरे । न खलु वृषलस्य श्रवणमुपगतोऽयं मया कृतः कौमुदीमहोत्सवप्रतिषेधः ?

कञ्चु । आर्य्य ! अथ किम् ?

चाण । सक्रोधम् । आः, केन कथितम् ?

कञ्चु । भयं नाटयित्वा । प्रसीदत्वार्य्यः ; स्वयमेव सुगाङ्ग प्रासादशिखरगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम् ।

चाण । आः, ज्ञातं तिष्ठ, तावद्भवद्भिरेव मदन्तरेण प्रोत्साह्य रोषितो वृषलः ; किमन्यत् ?

कञ्चु । सभयं तूष्णीमधोमुखस्तिष्ठति ।

---

अदर्शनदर्शने च प्रतिदिशन् वितरन् कुर्वंश्च । धाम्ना तेजसा पर्य्यायपातितहिमोष्णिम, पर्य्यायेण क्रमेण पातितं वितीर्णं हिममुष्णिमा उष्णत्वं च येन तादृशं सर्वगामि सहस्रधाम्नः सूर्य्यस्य धाम तेजः अतिशाययति अतिशेते स्वार्थे णिच् । एकदास्तोदयकरणात् रवितोऽस्याधिक्यात् व्यतिरेकालङ्कारः ।

(१) अन्या क्रिया क्रियान्तरं अन्तरायोविघ्नं प्रतिबन्धकं तदन्तरेण क्रियान्तरं प्रतिबन्धकं चेन्न तदेत्यर्थः ।

चाण। अहो राजपरिजनस्य चाणक्यस्योपरि विद्वेषपक्षपातः। अथ क्व? वृषलस्तिष्ठति?

कञ्चु। भयं नाटयन्। आर्य्य, सुगाङ्गप्रासादगतेन देवेनाहमार्य्यपादमूलं प्रेषितः।

चाण। उत्थाय। कञ्चुकिन्! सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इतइत आर्य्य! इति। उभौ परिक्रामतः।

कञ्चु। अयं सुगाङ्गप्रासादः, शनैरारोढुमर्हत्यार्य्यः।

चाण। नाट्येनावरुह्यावलोक्य च सहर्षमात्मगतम्। अये, सिंहासनमध्यास्ते वृषलः; साधु, साधु;

नन्दैर्व्वियुक्तमनपेक्षितराजवृत्तै-
रध्यासितञ्च वृषलेन वृषेण राज्ञाम्।
सिंहासनं सदृशपार्थिवसङ्गतञ्च,
प्रीतिं परां प्रगुणयन्ति गुणा ममैते (१)॥

उपसृत्य। विजयतां वृषलः।

राजा। सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा। आर्य्य! चन्द्रगुप्तः प्रणमति।

चाण। पाणौ गृहीत्वा। उत्तिष्ठोत्तिष्ठ वत्स!

आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीता
दा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।

---

(१) अनपेक्षितराजवृत्तैः अनादृतराजोचितचरितैः नन्दैरष्टपुत्त्रसहितेन योगानन्देन वियुक्तं चिरशून्यं सिंहासनं राजासनं राज्ञां वृषेण श्रेष्ठेन वृषलेन चन्द्रगुप्तेन अध्यासितम् तच्च सदृशपार्थिवसङ्गतम् इत्येते ममैव गुणाः परां प्रीतिं सन्तोषं प्रगुणयन्ति बहुलीकुर्वन्ति।

आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः (१) ॥

राजा । आर्य्यप्रसादादनुभूयतएवैतत् नाशास्यते उपविशत्वार्य्य इति । उभौ यथासनमुपविष्टौ ।

चाण । वृषल ! किमर्थं वयमाहूताः ?

राजा । आर्य्यस्य दर्शनेनात्मानमनुग्रहीतुम् ।

चाण । स्मितं कृत्वा । वृषल ! अलमनेन प्रश्रयेण (२), न निष्प्रयोजनमधिकारवन्तः (३) प्रभुभिराहूयन्ते ; तत्प्रयोजनमभिधीयताम् ।

राजा । आर्य्य ! कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्य्यः पश्यति ?

चाण । स्मितं कृत्वा । वृषल ! उपालब्धुं तर्हि वयमाहूताः ।

राजा । आर्य्य ! नोपालब्धुम् ।

---

(१) शिलान्तस्खलितसुरधुनीशीकरासारशीतात् शिलान्तात् प्रस्तरप्रान्तभागात् स्खलितायाः पतितायाः सुरधुन्या गङ्गायाः शीकरा एवासारो धारासंपातस्तेन शीतात् सहजशीतादपि गङ्गाजलसम्पर्कादतिशीतादित्यर्थः आ हिमालयात् नैकरागस्फुरितमणिरुचः अनेकप्रकारप्रकाशमानमणिकान्तियुतात् दक्षिणस्यार्णवस्य समुद्रस्य आ तीरात् आ कूलात् आगत्यागत्य भीत्या प्रणतानां नृपाणां शतैः तव चरणयुगस्य अङ्गुलीरन्ध्रभागा अङ्गुलिच्छिद्रप्रदेशाः चूड़ारत्नांशुगर्भाः चूड़ास्थरत्नरश्मिमिश्राः शश्वदेव क्रियन्ताम् इत्याशीः ।

(२) प्रश्रयेण विनयेन अन्यथा स्थितस्यान्यथाकीर्त्तनहेतुविनयेनेत्यर्थः ।

(३) अधिकारवन्तः अधिकृताः कार्य्येषु नियुक्ताः अमात्यादयः निष्प्रयोजनं नाहूयन्ते इत्यन्वयः ।

चाण। किं तर्हि।

राजा। विज्ञापयितुम्।

चाण। वृषल! यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण रुचयोनुरोद्धव्याः (१)।

राजा। आर्य्य! कः सन्देहः; किन्तु न कदाचिदपि आर्य्यस्य निष्प्रयोजना रुचिः प्रवर्त्तिष्यत इति अस्ति नः प्रश्नावकाशः।

चाण। वृषल! सम्यग्गृहीतवानसि मदाशयम्; नहि प्रयोजनमनपेक्षमाणः स्वप्नेऽपि चाणक्यो रुचिं प्रवर्त्तयिष्यति (२)।

राजा। आर्य्य! अतएव मां प्रयोजनशुश्रूषा मुखरयति(३)।

चाण। वृषल! श्रूयताम्; इह खल्वर्थशास्त्रकारास्त्रिविधसिद्धिमुपवर्णयन्ति तद्यथा, राजायत्तां, सचिवायत्ताम्, उभयायत्ताञ्चेति (४); तत् सचिवायत्तसिद्धेर्भवतः किं फलान्वेषणेन वाङ्मनसयोः(५) खेदमुत्पादयितुं, यतो वयमेवात्र नियुक्ता वेत्स्यामः।

---

(१) विज्ञापनीयानां रुचयोऽभिप्रायाः शिष्येण विनेयेन अनुरोध्याः अनुगम्याः यथा ते रोचन्ते विनेयस्तथैवानुवर्त्ततेत्यर्थः।

(२) रुचिमभिप्रायं कर्त्तव्येष्विति शेषः प्रवर्त्तयिष्यति करिष्यति।

(३) मुखरयति वाचालयति कथनाय प्रेरयतीत्यर्थः।

(४) उभयोः राजसचिवयोरायत्तामधीनाम्।

(५) वाक् वागिन्द्रियं च मनश्च नि० अच्। वाङ्मनसयोः मुखचित्तयोः खेदं स्वस्वक्रियायां व्यापारकरणरूपमायासम् उत्पादयितुं यत् फलस्योद्देश्यस्यान्वेषणमनुधावनं तेन किं, तत् साध्यं नास्तीत्यर्थः। अत्र चान्वेषणेन सहैककर्त्तृकत्वात् तुमन् समर्थनीयः।

राजा। सकोप इव (१) मुखं परिवर्त्तयति।

ततो नेपथ्ये वैतालिकौ पठतः।

एकः।

आकाशं काश[तूल][पुष्प]च्छविमभिभवता भस्मना शुक्लयन्ती,
शीतांशोरंशुजालैर्जलधरमलिनां क्लिन्दतीं कृत्तिमैभीम्।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्व्वा
हासश्रीराजहंसा हरतु तनुरि[ह][व] क्लेशमैशी शरद्वः(२)॥

---

(१) चाणक्यस्यैवोपदेशेन कृत्रिमकोपस्य कर्त्तव्यतया अनेनैव हेतुना कृतकः कोपो जात इति सूचयन्नाह सकोप इवेति। वास्तविककोपराहित्यसूचनाय इवशब्दः।

(२) काशतूलच्छविं काशपुष्पेण छविः कान्तिर्यस्य क्वचित् काशपुष्पच्छविमित्येव पाठः आकाशम् आकाशशब्दे पुंस्त्वस्यापि सम्भवात् तद्विशेषणेऽपि पुंस्त्वम्। अभिभवता तिरस्कुर्व्वता तत्सदृशेनेत्यर्थः भस्मना विभूत्या उपलक्षिता, जलधरमलिनां मेघश्यामां क्लिन्दतीमार्द्रामैभीं हस्तिसंबन्धिनीं कृत्तिं चर्म्म शीतांशोः शिरस्थचन्द्रस्य अंशुजालैः किरणसंघैः शुक्लयन्ती श्वेतां कुर्व्वती, कौमुदीं कुमुदानामिमां तत्सम्बन्धिनीमिव धवलां शुभ्रां कापालीं नृकपालसम्बन्धिनीं स्रजं मालामुद्वहन्ती धारयन्ती, इत्यतोऽपूर्व्वा आश्चर्य्या, हासश्रीराजहंसा हास्यसम्मत् प्रसादहेतुकहास्यविभव इति यावत् राजहंस इव यस्यां तादृशी, ऐशी ईशसंबन्धिनी तनुःमूर्त्तिः मूर्त्तिरूपा शरत् वो युष्माकम् इह संसारे क्लेशमाध्यात्मिकादिदुःखं देहतापं च हरतु नाशयतु। अत्र शरदि ईशत्वारोपसिद्धये तद्विशेषणे भस्मादौ काशपुष्पादिसादृश्योक्तिरित्यत उपमासमुल्लासितो रूपकालङ्कारः इति बोध्यम् तनुरिवेति पाठे उपमानसिद्धरङ्कमुपमेति विशेषः। किन्तु उत्तरत्र विशिष्टदेवतारूपणेनेत्युतुरुक्तिः पुर्व्वापरविरुद्धा स्यात् इति तनुरिहेत्येवः पाठः सुष्ठु।

अपि च ।

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्व्वी जनितजललवा, जृम्भितैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः (१) ॥

द्वितीयः ।

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो-
र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।

---

(१) शेते विष्णुः सदाषाढ़े कार्त्तिके च विबुध्यते इत्युक्तेः शरदन्ते विष्णुनिद्राभङ्गस्य शास्त्रसम्मतत्वात् हरेर्निद्रावसनावस्थां वर्णयन् शरदृगुणमेव स्तवन्नाह प्रत्यग्रोन्मेषेति । प्रत्यग्रा अभिनवा उन्मेषः उन्मीलनमेव जिह्मा पुटविदारणं यस्याः सा तथा, रत्नदीपप्रभाणां शेषशिरःस्थानि रत्नान्येव दीपास्तमोनाशकत्वात् तेषां प्रभाणां क्षणं व्याप्य अनभिमुखी असम्मुखी एतच्च झटित्युन्मिषतः चक्षुषस्तदभिमुखत्वं न सम्भवति तत्प्रभाभिः प्रतिहतत्वादिति स्वभावोक्तिमनुरुध्याह न पुनर्भगवतो दृष्टेः क्वचिदपि प्रतिघातोऽस्तीति बोध्यम् । साङ्गभङ्गैः अङ्गभङ्गसहितैः जृम्भितैरास्यविदारणहेतुवायुविशेषव्यापारैर्जनितजललवा सञ्चिताश्रुकणा अतएव आत्मव्यापारे नेत्रस्य व्यापारे ईक्षणरूपक्रियायाम् गुर्व्वी गुरुत्वात् चाञ्चल्यरहिता मन्थरेति यावत् फणामण्डलोपधानं फणामण्डलमेव उपधानं वालिशं यत्र तादृशं नागाङ्कं शेषनागक्रोड़रूपमुरु वृहत् शयनं शय्यां मोक्तुमिच्छोर्हरेः निद्राच्छेदाभिताम्रा निद्राभङ्गेणातिलोहिता आकेकरा ईषत्सङ्कुचिता यथा च तस्यास्तथात्वं तथोक्तं प्राक् दृष्टिर्नेत्रं वो युष्मान् चिरमवतु तादृशदृष्टिकालत्वात् शरदि वक्तारोप इति द्रष्टव्यम् ।

दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा
नाज्ञाभङ्गं सहन्ते नृवर ! नृपतयस्त्वादृशाः सार्व्वभौमाः (१) ॥

अपिच ।

भूषणाद्युप[भोगेन] [चारेण] प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते (२) ॥

---

(१) तेषु तेष्वाज्ञाभङ्गेषु चन्द्रगुप्तः प्रोत्साहनीय इत्युपदेशेन राक्षसप्रहितयोस्तयोर्मध्ये एकेन प्राकरणिकशरद एव गुणा वर्णिता अपरस्तु सर्व्वतेजोऽभिभाविनो राज्ञ आज्ञाभङ्गरूपापराधस्यासह्यत्वं वर्णयित्वा तत्कोपमुद्दीपयितुमाह सत्वोत्कर्षस्येति । मदसलिलमुचां दानजल-वर्षिणां गर्व्वरूपजलवर्षिणाञ्च नागयूथेश्वराणां हस्तियूथाधिपानां हस्तियूथतुल्येश्वराणाञ्च स्वेन धाम्ना तेजसा जेतारः, कस्यापि हेतोः कस्मै अपि प्रयोजनाय । षष्ठीहेतुप्रयोगे इति षष्ठी । धात्रा विधात्रा सत्त्वोत्कर्षस्य बलातिशयस्य प्राणिश्रेष्ठतायाश्च निधयः आधारा इव कृताः उत्पादिताः व्यक्तः स्पष्टो मान उन्नतिरेवावलेपोऽहङ्कारो येषां तादृशाः । हे नृवर ! मनुष्यश्रेष्ठ ! त्वादृशाः भवादृशाः केऽपि न सर्व्वेऽपीत्यर्थः सार्व्वभौमाः सर्व्वभूमीनामधीश्वराः नृपतयः नृपा मृगाणा-मधिपतयः सिंहा इव दंष्ट्राभङ्गमिवाज्ञाभङ्गमादेशस्य स्वविषयेष्वप्रचारं न सहन्ते ।

(२) इदानीमाज्ञाभङ्गे प्रभोः प्रभुत्वमेव न भवतीति वर्णयन्नाह । भूषणाद्युपभोगेन भोग्यवस्तुभोगेन क्वचिदुपचारेणेति पाठः उक्तार्थकः प्रभुः स्वामी न प्रभुः प्रभुशब्दवाच्यः तस्य तत्पदशक्यतानवच्छेदकत्वात् प्रभवति स्वाज्ञया इतरान् प्रवर्त्तयितुं स्वतन्त्रो भवति इति स्वांज्ञायां

चाण। आकर्ण्यात्मगतम्। प्रथमं, तावद्विशिष्टदेवतारूपणेन(१) प्रवृत्तशरद्गुणप्रख्यापनमिदमाशीर्वचनम् ; इदमपरं किमिति नावधारयामि। विचिन्त्य। आः, ज्ञातम् ; राक्षसस्यायं प्रयोगः। आ दुरात्मन्! राक्षसहतक! दृश्यसे, जागर्त्ति खलु कौटिल्यः (२)।

राजा। आर्य्य! वैहीनरे दीयतामाभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रम्।

कञ्चु। यदाज्ञापयति देवः। इति उत्थाय परिक्रामति।

चाण। सक्रोधम्। वैहीनरे! तिष्ठ, तिष्ठ, न गन्तव्यम्। वृषल! किमयमस्थान एव महानर्थोत्सर्गः क्रियते?

---

स्वतन्त्रत्वरूपार्थमेव प्रभुशब्द आचष्टे इत्याह। परैरिति परैरितरैः अपरिभूता अनवज्ञाता अभग्ना इति यावत् आज्ञा यस्य तादृशः प्रभुः प्रभुशब्दवाच्यः अन्वर्थक इत्यर्थः स च त्वमिवान्योऽपि तथाभूतधर्मवत्त्वेनैव प्रभुरित्यर्थः।

(१) विशिष्टाया विशेषणयुक्ताया देवतायारूपणेन शरदि तदभेदारोपणेन प्रवृत्तायाः शरदो गुणानां प्रख्यापनं वर्णनं यत्र तादृशमाशीर्वचनमित्यर्थः। यथा च शरदि तद्रूपणं तथा दर्शितं प्राक्।

(२) यतः कौटिल्यः जागर्त्ति स्वकार्य्येऽप्रमत्तो भवति ततो जागरूकस्य गृहे न चौर्य्यं भवतीत्यभिधातुमाह दृश्यसे इति राक्षसव्यापारे तत्त्वारोपात् दृश्यसे इत्युक्तम् दर्शनन्तु तद्व्यापारस्यैवेति बोध्यम्। तथा च त्वया यः कश्चित् प्रणिधिना व्यापारः सम्पाद्यते तत्र तत्राहं जागर्मीति तत्प्रयासो वृथेति सूचयितुं राक्षसहतक। इति संबोधितम् विफलप्रयासत्वात् हतभाग्यत्वाच्च हतक इति। इवार्थे कनित्यवधेयम्।

राजा । आर्य्येणैवं सर्व्वतो निरुद्धचेष्टाप्रसरस्य मम बन्धनमिव राज्यं, न राज्यमिव ।

चाण । वृषल ! स्वयमनभियुक्तानां (१) राज्ञामेते दोषा भवन्ति । तद्यदि न सहसे, तदा स्वयमेवाभियुज्यस्व ।

राजा । एते वयं स्वकर्म्मण्यभियुज्यामहे (२) ।

चाण । प्रियं नः ; वयमपि स्वकर्म्मण्यभियुज्यामहे (३) ।

राजा । यद्येवं ; तर्हि कौमुदीमहोत्सवप्रतिषेधस्य प्रयोजनं श्रोतुमिच्छामि ।

चाण । वृषल ! कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

राजा । प्रथमं तावन्ममाज्ञा[विधानम्] [व्याघातः] (४) ।

---

(१) स्वयमनभियुक्तानां राज्यतन्त्रेष्वनुद्युक्तानाम् एते अस्वन्तन्त्ररूपा दोषाः । अभियुज्यस्व राज्यतन्त्रावेक्षणेऽभिनिविष्ट उद्युक्तो भव । अभिपूर्व्वस्य दैवादिकस्य युज्यतेर्लोटिरूपम् प्रेरणे च लोट् ।

(२) अमात्यादिनियोगरूपे स्वकर्म्मणि स्वयं राज्यतन्त्रावेक्षणे अभियुज्यामहे उद्युक्ता भवामः भविष्यत्सामीप्ये लट् ।

(३) स्वकर्म्मणि अमात्यकर्म्मणि राजनियोगानुसारेणैव कार्य्यादिकरणे इत्यर्थः ।

(४) राज्यलाभे प्रथममितरकार्य्यात् प्राक् आज्ञाविधानं आज्ञाया आदेशस्य विधानं प्रचारकरणं । 'यथा आज्ञायते तथा लोकैः क्रियते न वेति' जिज्ञासार्थमेव प्रथममाज्ञाप्रचार इत्यर्थः आज्ञाव्याघात इति पाठे आज्ञाया अव्याघातो भवति नवेत्यकारप्रश्लेषेण व्याख्यानम् ।

चाण। वृषल! ममापि खलु त्वदाज्ञाव्याघात(१) एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति। कुतः (२)

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनाना-
मा पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम्।
मालेवाज्ञा सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति, विनयालङ्कृतं ते प्रभुत्वम्(३)॥

राजा। अथापरमपि (४) प्रयोजनं यच्छ्रोतुमिच्छामि।

चाण। तदपि कथयामि।

राजा। कथ्यताम्।

---

(१) तवाज्ञाया व्याघातः स्वकार्य्यसमर्थनायासामर्थ्यं भङ्ग इति यावत्।

(२) तस्य प्रयोजनतां स्थापयितुं स्वयमाक्षिपति कुत इति। त्वदाज्ञाविघातस्य तदेव प्रयोजनता स्यात् यदि त्वयि मम द्वेषः स्यात् न च तथा, तत् कथं तस्य प्रयोजनत्वमित्याक्षेपार्थः।

(३) श्लोकेन समाधत्ते। अम्भोधीनामित्यादिना। यस्य तावदाज्ञा कुत्रापि न प्रतिहता तस्याज्ञा मयि स्खलन्तीं तव प्रभुत्वं विनयालङ्कृततया प्रथयतीति समुदितार्थः। अक्षरार्थस्तु तमालप्रभवकिसलयेन तमालजातनवपल्लवेन श्यामानि कृष्णानि वेलावनानि कूलस्थारण्यानि येषां तेषाम्, चटुलानां चञ्चलानां तिमिकुलानां राजमत्स्यभेदानां कुलेन समूहेन क्षोभितं विलोड़ितमन्तर्जलं येषां तादृशानां च चतुर्णामम्भोनिधीनां समुद्राणाम् आ: पारेभ्यः आगतैरिति शेषः कुतो भवानित्यादिवत् अपेक्षितक्रियापादानतया पञ्चमी। अथ वा आङ्योगे पञ्चमी सप्तम्यर्थे, तत्रस्थैरपीत्यर्थः। नतनृपशतैः सपुष्पा मालेव या आज्ञा शिरोभिरुह्यते सा मयि स्खलन्तीत्युक्तार्थम्।

( ४ ) प्रथममित्यनेनोपक्षिप्तं प्रयोजनान्तरमस्तीति तत् पृच्छति अथापरमिति।

चाण । शोणोत्तरे ! शोणोत्तरे ! मद्वचनात् कायस्थमचलदत्तं ब्रूहि, यत्तद्भद्रभटप्रभृतीनां (१) लेख्यपत्रं तत्तावद्दीयतामिति ।

प्रती । जं अज्जो आणवेदित्ति । निष्क्रम्य पुनः प्रविश्य । अज्ज एदं पत्तं ।

चाण । गृहीत्वा । वृषल ! श्रूयताम् ।

राजा । दत्तावधानोऽस्मि ।

चाण । वाचयति । स्वस्ति सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणाम् इतोऽपक्रम्य मलयकेतुमाश्रितानां परिमाणलेख्यपत्रम् । तत्र प्रथमं, तावत् गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य चन्द्रभानोर्भागिनेयो हिङ्गुरातः, देवस्य स्वजनगन्धी (२) महाराजो बलगुप्तः, देवस्यैव कुमारसेवको (३) राजसेनः, सेनापतेः

---

(१) भद्रभटप्रभृतीनामितोऽपरज्य मलयकेतुमाश्रितानां संख्याज्ञापकमिति शेषः अग्रे प्रमाणलेख्यपत्रमितुरक्तेः इहापि तथार्थकता बोध्या । तथाकथनञ्च चन्द्रगुप्तसमीपेऽपि मन्त्रगुप्त्यर्थम् । वस्तुतः तेषामिति कर्त्तरि षष्ठी तैरेव तत्पत्रं लिखितं राज्ञः समीपे तु अन्येन लिखितमिति द्योतनार्थं कर्म्मणि षष्ठीपरत्वमुक्तम् तथा च प्रमाणरूपक्रियायां षष्ठ्या अन्वयः । भद्रभटादयश्च चाणक्योपदेशेन चन्द्रगुप्तेऽपरागमुद्भाव्य इतोऽपक्रम्य मलयकेतुमाश्रिताः तच्चाग्रे षष्ठाङ्के स्फुटीभविष्यति ।

(२) स्वजनस्य गन्धो लेशोऽस्त्यस्य इनिः । असन्निकृष्टज्ञातिरित्यर्थः ।

(३) कुमरावस्थायां सेवकः कुमारावधि सेवको वा ।

सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, मालवराज-पुत्रो रोहिताक्षः, क्षत्रगणमुख्यतमो विजयवर्म्मेति। आत्म-गतम् (१)। एते वयं देवस्य कार्य्ये अवहिताः स्म इति। प्रका-शम्। एतावदेतत् (२) पत्रम्।

राजा। आर्य्य! एतेषामपरागहेतून्(३) श्रोतुमिच्छामि।

चाण। वृषल! श्रूयताम्; अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ एतौ खलु स्त्रीमद्यमृगया[सक्तौ] शीलौ हस्त्यश्वावेक्षणे ह्यनभियुक्ताविति, स्वाधिकाराभ्या(४)

(१) एतावत्पर्य्यन्तं राजश्रवणयोग्यमुच्चैः पठित्वा गोप्यांशम् उपांशूच्चारेत्याह आत्मगतमिति। गोप्यांशमेवाह एते वयमित्यादि। एते इत्यादिकं भद्रभटादीनामुक्तिः। एते भवदुपदेशेन तत्तन्निमित्तानि घोषयित्वा चन्द्रगुप्तादपरक्ततां ख्यापयन्तः अत्रागता वयं भद्रभटादयो देवस्य चन्द्रगुप्तस्य कार्य्ये भवदुपदिष्टसुहृद्भेदादिके व्यापारे अवहिताः अप्रमत्ताः स्म। पत्रस्थितस्य एतदंशस्य चन्द्रगुप्तं प्रत्यपि गोपनीयतया चाणक्येनोपांशूच्चारणं कृतमिति द्रष्टव्यम्।

(२) प्रकृतपत्रस्थं रहस्यांशमप्रकाशतयोऽपांशूच्चार्य्य उपसंहरन् व्यक्तमाह एतावदिति।

(३) चाणक्यनीतेर्दुरवगाह्यतया एतावत्कालपर्य्यन्तं भद्रभटा-दीनामपरागहेतूनां चन्द्रगुप्तेनाज्ञानात् तज्ज्ञानाय पृच्छति एतेषामिति अपरागो विरागस्तस्य हेतून् कारणानि सर्व्वेषामेकविधविरागहेत्वस-म्भवात् एकमात्रहेतुना विरागासम्भवाच्च हेतुबहुत्वमस्तीति द्योतय-न्नाह हेतूनिति।

(४) स्वाधिकाराभ्यां स्वस्वाधिकारात् गजावेक्षणात् अश्वावेक्षणाच्च स्वस्वकर्त्तव्यकर्म्मणः अवरोप्य प्रच्याव्य तत्तदधिकारं ताभ्यामाच्छिद्येत्यर्थः।

मवरोप्य, मया स्वजीवनमात्रेणैव स्थापितावित्यपरक्तौ, गत्वा(१) स्वेन स्वेन चाधिकारेण व्यवस्थाप्य (२) मलयकेतुमाश्रितौ। यावेतौ हिङ्गुरातबलगुप्तौ तावप्यत्यन्त [लुब्धप्रकृती], [लोभासक्तौ] दत्तं(३) धनमबहु मन्यमानौ, तत्र बहु लभ्यत इति मलयकेतुमाश्रितौ। योऽप्यसौ भवतः कुमारसेवको राजसेनः सोऽपि तव प्रसादादतिमात्रं कोषहस्त्यश्वं सहसैव सुमहदैश्वर्य्य मवाप्य पुनरुच्छेदशङ्कयापक्रम्य मलयकेतुमाश्रितः। योऽयमपरः सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः; असावपि तत्र काले पर्व्वतकेन सह समुत्पन्नसौहार्दस्तत्प्रीत्या(४) च 'पिता ते चाणक्येन घातित इति' रहसि त्रासयित्वा, मलयकेतुमपवाहितवान्; ततो भवदपथ्यकारिषु

---

(१) गत्वा इतोऽपक्रम्य मलयकेतुसमीपमिति शेषः।

(२) स्वेन स्वेनाधिकारेण गजाध्यतारूपेण अश्वाध्यक्षतारूपेण च व्यवस्थाप्य आत्मानमिति शेषः मलयकेतुमाश्रितौ तमाश्रित्य गजाध्यक्षोऽश्वाध्यक्षश्च बभूवेत्यर्थः।

(३) दत्तं प्राक् निरूपितमिति शेषः नन्दनृपजये एतद्दां दास्यामीति यत् प्राक् पणितमित्यर्थः क्वचित् प्राक् निरूपितमित्यधिकः पाठः। अबहुमन्यमानौ ततोऽधिकलाभेच्छया तेन धनेनापरितुष्यन्तौ।

(४) तस्मिन् पर्व्वतके नृपे या प्रीतिः स्नेहस्तया अपवाहितवानित्यन्वयः। कथङ्कारमपवाहितानित्याह त्रासयित्वेति। त्रासनप्रकारमाह। पिता ते इति परिपणितराज्यार्द्धदानभीरुणा चाणक्येन तव पिता यथा घातितस्तथा तदुपरमे तदुत्तराधिकारी त्वमपि परिपणितराज्यार्द्धभागी स्या इत्याशयेन घातयिष्यसे इति भीषयित्वास्मात् स्थानात्तव पलायनमेव श्रेय इत्युपदिश्य अपनीतवानिति समुदितार्थः।

चन्दनदासप्र[मुखे][भृति]षु निगृह्यमाणेषु, स्वदोषाशङ्कयापक्रम्य मलयकेतुमाश्रितः ; तेनाप्यसौ(१) ममानेन प्राणाः परिरक्षिता इति कृतज्ञताम् अनु[वर्त्त][रुध्य]मानेन, पैतृकञ्च परिचयम्, आत्मनोऽनन्तरममात्यपदं ग्राहितः। यावेतौ रोहिताक्षविजयवर्म्माणौ, तावत्यन्तमानित्वात् स्वदायादेभ्यस्त्वया दीयमानं बहुसम्मानमसहमानौ, मलयतुमाश्रितौ। इत्येषामपरागहेतवः।

राजा। आर्य्य! एवमेतेषु परिज्ञातापरागहेतुष्वपि क्षिप्रमेव कस्मान्न प्रतिविहितमार्य्येण।

चाण। वृषल! न पारितं प्रतिविधातुम्।

राजा। किमकौशलात्? उत प्रयोजनापेक्षितया।

चाण। कथमकौशलं भविष्यति ; नियतं प्रयोजनापेक्षितया

राजा। तदप्रतिविधानप्रयोजनमिदानीं श्रोतुमिच्छामि।

चाण। वृषल! श्रूयतामवधार्य्यताञ्च।

राजा। उभयमपि क्रियते ; कथ्यताम्।

चाण। वृषल! इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानं, तद्यथानुग्रहो, निग्रहश्चेति। अनुग्रहस्तावदाक्षिप्ताधिकारयो(२) र्भद्रभटपुरुषदत्तयोः पुनरधिकारारोपणमेव ;

---

(१) मलयकेतुनापि कृतज्ञतां कृतस्य आत्मप्राणरक्षारूपोपकारस्याभिज्ञतां प्रत्युपकारिताम्, पैतृकं पितृत आगतं परिचयं सुहृद्भावरूपं चिरानुगुणञ्च अनुरुध्यमानेन [अनुवर्त्तमानेन] अपेक्षमाणेन आत्मनोऽनन्तरम् अव्यवहितम् अमात्यपदं सचिवत्वं ग्राहितः प्रापितः।

(२) आक्षिप्त आच्छिन्नोऽधिकारः स्वस्वकर्त्तव्याध्यक्षता ययोः अधिकारादवरोपितयोरित्यर्थः।

अधिकारस्थ पुनस्ताद्दृशेष व्यसनदोषा (१) दनभियुक्तेषु पुनरारोप्यमाण:, सकलस्यैव राज्यस्य मूलं हस्त्यश्वमवसादयति। छिङ्गुरातबलगुप्तयोरत्यन्तलुब्धप्रकृतिकयो:, सकलराज्यसम्प्रदानेनाप्यपरितुष्यतोरनुग्रह: कथं कर्त्तुं शक्यते। राजसेनभागुरायणयोस्तु स्वधनप्राणनाशभीतयो: कुतोऽनुग्रहस्यावकाश:? । रोहिताक्षविजयवर्म्मणोरपि दायादमानप्रदान[दह्यमानयो] पीड़ितयोर्मानमप्यपमानं मन्यमानयो:, अत्यन्तमानिनो: कीदृशोऽनुग्रह: प्रीतिं जनयिष्यतीति; परिहृत: पूर्व्व: पक्ष: (२)। उत्तरोऽपि (३) खलु वयमचिरादधिगतनन्दैश्वर्य्या: सहोत्थायिनं प्रधानपुरुषवर्गमुग्रेण दण्डेन पीड़यन्तो, नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या, [मा भूम] [भवाम] (४) इत्यत: परिहृत एव। तदेवमनुगृहीतास्मद्भृत्य-

(१) व्यसनदोषात् मृगयामद्यपानादिरूपदोषात् अनभियुक्तेषु स्वस्वकार्य्येष्वभिनिवेशशून्येषु अयोग्येष्वित्यर्थ:। सामान्येनोक्तं बहुत्वम्। तथाविधेषु पुनरारोप्यमाणोऽधिकारो गजाश्वादिपालनाध्यक्षत्वम्। हस्तिनश्च अश्वाश्च सेनाङ्गत्वेन बहूनाममेकवद्भाव:। तदधीनयुद्धसाध्यत्वेन तस्य तन्मूलत्वम्।

(२) पूर्व्व: पक्ष: प्रागुक्तयोरनुग्रहनिग्रहयोर्मध्ये पूर्व्वपठित: पक्ष: कोटि: अनुग्रहरूप: परिहृत: उक्तप्रकारेण तत्तत्कारणेऽनिष्टविशेषाशङ्कया परित्यक्त: नादृत इति यावत्।

(३) उत्तर: निग्रहाख्य: पक्ष: परिहृत इत्यग्रेणान्वय:।

(४) निग्रहपक्षपरिहारे हेतुमाह। अविश्वास्या मा भूमेति माङि लुङिति लुङ्। क्वचित् भवाम इति पाठ: तत्र भविष्यत्सामीप्ये लट्। अविश्वास्यत्वे हेतु: प्रधानपुरुषवर्गमिति उग्रेण तीक्ष्णेन निग्रहरूपेण पीड़यन्त: दु:खाकुर्व्वन्त:। तथाच प्रधानपुरुषाणां पीडनमेवाविश्वास्यत्वे हेतुरिति भाव:।

पक्षो, (१) राक्षसोपदेशश्रवणप्रवणो (२) महीयसा म्लेच्छराजबलेन परिवृतः, पितृवधामर्षितः (३) पर्व्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यत इति, सोऽयं व्यायामकालो (४) नोत्सवकाल इति। अतो दुर्गसंस्कारे आरब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः (५)।

राजा। आर्य्य! बहु प्रष्टव्यमत्र।

चाण। वृषल! विश्रब्धं पृच्छ, ममापि बह्वाखेयमत्र।

राजा। एष पृच्छामि।

चाण। अहमप्येष कथयामि।

---

(१) अनुगृहीतः अनुकूलीकृतः अस्मद्भृत्यपक्षः भद्रभटादिवर्गो येन एतदुक्तिश्च अस्माकं सुहृद्बलहीनत्वं तस्य च तत्सम्पन्नत्वमिति तस्य बलवत्त्वेन दुर्जयत्वद्योतनार्था।

(२) राक्षसोपदेशश्रवणेत्यादिनापि तस्य सुसचिवसाचिव्यात् तदनुसारित्वाच्च सुहृद्भेदाभावेन दुर्जयत्वं दर्शितम्। एतेन दण्डपक्षो निवारितः।

(३) दुर्जयो बली चेत् शत्रुस्तर्हि सन्धीयतामित्याशङ्क्य तस्य सन्धेयत्वमपि नास्तीत्याह पितृवधामर्षित इत्यादि। राज्यादिलुब्धस्यैव राज्यादिदानेन सन्धेयता न तु अपकारप्रतिचिकीर्षोः, तस्य च पितृवधप्रतिरूपस्य अस्मद्वधस्यैवेष्टत्वान्न सन्धेयत्वमिति भावः।

(४) व्यायामकालः सेनासंग्रहदुर्गसंस्काराद्यायासस्य कालः नोत्सवस्य कालः आपद्रहितकाले एव तस्यानुष्ठेयत्वात्।

(५) कौमुदीमहोत्सवप्रतिषेधे यत् कारणं पृष्टं तदुपदिश्य प्रकृतमनुवदति प्रतिषिद्ध इति पूर्व्वोक्तहेतुना प्रतिषिद्ध इत्यर्थः कौमुदीमहोत्सव इति शेषः।

राजा । योऽयमस्माकमस्य सर्व्वस्यैवानर्थहेतुर्मलयकेतुः स कस्मादार्य्येणापक्रामन्नुपेक्षितः (१) ।

चाण । वृषल ! मलयकेतोरपक्रमणानुपेक्षणे द्वयी(२) गतिः, स्यात्; अनुगृह्येत निगृह्येत (३) वा । अनुग्रहे पूर्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत । निग्रहे तावदस्य, (४) पर्वतकोऽस्माभिर्व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात् । प्रतिश्रुतार्द्ध (५) राज्यप्रतिपादनेऽपि पर्व्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यात् इति मलयकेतुरपक्रामन्नुपेक्षितः ।

---

( १ ) अपक्रामन् इतो वहिर्गच्छन् उपेक्षितः तदपक्रमो न प्रतिकृत इत्यर्थः ।

( २ ) अनुपेक्षणे, अपक्रमणराहित्याय प्रतीकारे द्वयी द्विविधा गतिरुपायः ।

(३) निग्रहानुग्रहौ च तदुपायावित्याह अनुगृह्येतेत्यादि ।

(४) एवं निग्रहानुग्रहौ तदुपायावित्युक्त्वा अनुग्रहेऽनिष्टं प्रदर्श्य निग्रहे दोषमाह निग्रहे इति अस्य मलयकेतोर्निग्रहे दण्डने कृतघ्नतायाः कृतोपकारिणोऽपकारित्वरूपदोषस्य हस्तो हस्तावलम्बनं स्वयमेव दत्तः स्यात् । ततपुत्त्रनिग्रहे हि अस्माभिरेव पर्व्वतको हत इति कृतघ्नतापवादः अस्मासु प्राप्तहस्तावलम्बनतया उत्तिष्ठेदिति भावः । अन्यथा मित्त्रपुत्त्रो मलयकेतुः कथमस्माभिर्हन्येत यद्यस्माभिः पर्व्वतको न हत इति लोकप्रत्ययस्स्यादिति भावः ।

(५) एवं निग्रहे दोषमुक्त्वा प्रतिश्रुतराज्यार्द्धप्रतिपादनरूपानुग्रहपक्षे दोषमाह प्रतिश्रुतेत्यादि । पर्व्वतकविनाशः अस्मत्कृत इति शेषः पर्व्वतकस्य विनाशो विनाशनं विपूर्व्वात् नशेर्ण्यन्तात् घञ् । कृतघ्नैव कृतघ्नतामात्रम् मयूरव्यंसकादिसमासः । तदेव परं प्रयोजनमुद्देश्यं यस्य तथाभूतः स्यात् प्रतिश्रुतराज्यार्द्धदाने पर्व्वतकहननं किंफलकं स्यात् केवलं कृतघ्नतामात्रफलकं तत् स्यादित्याशयः ।

राजा। आर्य्य! अत्र तावदेवम् (१)। राक्षसः पुनरिहै-वान्तर्नगरे वर्त्तमान आर्य्येणोपेक्षित इत्यत्र किमुत्तरमार्य्यस्य?

चाण। वृषल! राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागित्वात् सुचिरमेवात्र सहवासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तं विश्वास्यः, प्रज्ञापुरुषकाराभ्यामुपेतः, (२) सहायसम्पदा युक्तः, कोषबलवानिहैवान्तर्नगरे वर्त्तमानो महान्तं (३) खल्वन्तःकोपमुत्पादयेत्। दूरीकृतस्तु, वाह्यकोप-मुत्पादयन्नपि न दुःखसाध्यो भविष्यतीत्यतोऽपक्रामन्नुपेक्षितः।

---

(१) अत्र मत्पृष्टविषये तावदेवमुत्तरमिति शेषः तच्चार्य्यस्येत्युत्तर-स्थेनाकृष्यमाणेनान्वेति।

(२) प्रज्ञापुरुषकारौ धीपौरुषे ताभ्यामुपेतः सम्पन्नः तेन तस्य बलात् निग्राह्यत्वाभावो दर्शितः। बलादनिग्राह्यत्वे हेत्वन्तरमाह सहायसम्पदेति। तत्रापि हेतुः प्रकृतीनां विश्वास्य इति। तद्विश्वासे हेतुमाह नन्दानुरक्तानामिति नन्दानुरागेणैव प्रकृतयस्तत्संबन्धिनि चिरानुरक्ते चिरसहवासिनि च राक्षसेऽनुरक्ता इति तासां राक्षसपक्ष-पातित्वमिति भावः। सहायवतो धीपौरुषयुतस्यापि निर्द्धनस्य न कार्य्यान्तगामित्वमिति दर्शयन्नस्य तत्सम्पत्तिमप्याह कोषबलेत्यादि। तेनासौ सर्व्वथा तदानीं दुर्निग्राह्य इत्युपेक्षित इति भावः।

(३) किञ्चास्य न केवलं तदानीं दुर्दमता अपि तु इह स्थितस्य प्रकृतिभेदनकारित्वादिक्रमेण अमात्यादिभेदनसम्पादकत्वसम्भावनापीति इतोऽपसारितवानित्याह महान्तमिति अन्तःकोपममात्यादीनां परस्पर-भेदनरूपं क्षोभं चालनमित्यर्थः।

राजा। तत्किमिर्थमिहस्य एवोपायैर्नोपक्रान्तः (१)।

चाण। अथ कथमपक्रान्तो (२) भविष्यति ननूपायैरेवासौ हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः। दूरीकरणस्य चोक्तं प्रयोजनम्।

राजा। आर्य्य! कस्माद्विक्रम्य न गृहीतः?

चाण। वृषल! राक्षसः खल्वसौ विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्; एवं सत्युभयथापि दोषः। पश्य

स हि भृशमभियुक्तो यद्युपेयाद्विनाशं,
ननु वृषल! वि[यु][मु]क्तास्तादृशेनापि पुंसा।
अथ तव बलमुख्यान्नाशयेत्, सापि पीड़ा,
नवगज इव तस्मात्सोऽभ्युपायैर्विनेयः (३)॥

---

(१) इहस्थे एतन्नगरस्थे एव राक्षसे सामादिभिः उपायैःउपक्रान्तो भवान् वशीकर्त्तुमिति शेषः कर्त्तरि क्तः।

(२) ननु भो अयं केनोपायेन अपक्रान्तोऽपक्रम्य इतो दूरस्थो भविष्यति इत्याशयेनेत्यादि उपायैरेव सामादिभिरेव असौ हृदयेशयः हृदयविद्धः शङ्कुः कील इव उद्धृत्य उत्पाट्य दूरीकृतः अपसारितः यथा हृदयविद्धशङ्कोस्तत्र स्थितिकालेऽधिकपीड़ादायकता तदुद्धारे च तत्कृतव्रणस्य सुकरोपायसाध्यता एवमस्यान्तिकस्थित्याधिकदोषकारित्वम् अपक्रमणे च सुखसाध्यता इति बुद्धैव नात्रस्थस्य प्रसाधनाय यत्नः कृत इति भावः।

(३) अभियुक्तः अस्मद्बलैः आक्रान्तः। तादृशेन प्रभुभक्त्यतिशयशालिना सापि त्वद्बलनाशनं विधेयप्राधान्यात् स्त्रीत्वम् पीड़ा मनो-

राजा। न शक्नुमो वयमार्य्यस्य वाचा वाचमतिशयितुं सर्वथा अमात्यराक्षस एवात्र प्रशस्यतरः।

चाण। सक्रोधम्। न भवानिति(१) वाक्यशेषः। मा तावदेवं; भो वृषल! तेन किं कृतम्?

राजा। यदि न ज्ञायते, तदा श्रूयतां; तेन खलु महात्मना

लब्धायां पुरि यावदिच्छमुषितं कृत्वा, पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः।
अत्यर्थं विपुलैः सुनीतिविभवैः संमोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः (२)॥

चाण। विहस्य। वृषल! एतत् कृतं राक्षसेन?

---

दुःखहेतुः। नवगजः नवबद्धो वनहस्तीव उपायैः सामादिभिः दमनसाधनैश्च विनेयः दम्यः शिक्षणीयश्च।

(१) राज्ञा राक्षस एवेत्येकारेणान्यस्य प्रशस्यतरता नास्तीत्युक्तं प्रकृते चान्यशब्दार्थोऽहमेवेति चाणक्यः सकोपमुपवर्णयन्नाह न भवानिति।

(२) लब्धायामस्माभिरिति शेषः अधिकृतायां पुरि राजधान्यां नोऽस्माकं गले पदं चरणं कृत्वा अनादृत्येत्यर्थः तत्रापि न किञ्चित्कालं किन्तु यावदिच्छमभिलाषपर्य्यन्तम् उषितं स्थितं न केवलं स्थितमेव किन्तु अस्माकं प्रतिकूलमप्याचरितमित्याह व्याघात इत्यादि। अत्यर्थं विपुलैः नितान्तदीर्घैः सुनीतिविभवैः सुन्दरनयकौशलैः मोहम् "अयं दुष्टो नवेति" संशयम् "दुष्ट एवेति" भ्रमं वा आपादिताः प्रापिता मतयः बुद्धयः अन्तःकरणवृत्तयः विश्वास्येष्वपि स्वेषु स्वकीयेषु वर्गेषु पक्ष्येषु न विश्वसन्ति। तथाच लब्धाधिकारा अपि वयं किञ्चित् कर्त्तुमसमर्था इति तस्य प्रशस्यतरत्वमिति भावः।

राजा। अथ किं ; एतत् कृतममात्यराक्षसेन।

चाण। वृषल! मया पुनर्ज्ञातं, नन्दमिव भवन्तमुद्धृत्य, भवानिव भूतले मलयकेतुरधिराज्यमारोपितः।

राजा। अलमुपालभ्य आर्य्य! दैवेनेदमनुष्ठितं, किमत्रार्य्यस्य

चाण। हे मत्सरिन्!

आरुह्यारूढ़कोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूड़ां,
लोकप्रत्यक्षमुग्रां, सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम्।
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः, पर्य्यायभूताः पशव इव हताः पश्यतो राक्षसस्य (१)॥

अपिच

गृध्रैराबद्धचक्रं वियति चलनया दीर्घनिष्कम्पपक्षै-
र्धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः।
नन्दानां नन्दयन्तः पितृवननिलयान् प्राणिनः पश्य, चैतान्
निर्व्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः (२)॥

---

(१) आरूढ़स्य सञ्जातस्य कोपस्य स्फुरणेन विषमितया कुटिली-भूतया अग्राङ्गुल्या अङ्गुल्यग्रेण मुक्ता बन्धरहिता चूड़ा यत्र तां लोकप्रत्यक्षं सर्व्वसमक्षम् उग्रां सवंशनन्दकुलघातनार्थत्वेन विषमां प्रतिज्ञामारुह्य कृत्वेत्यर्थः नवनवत्यधिकं शतं तन्मितानां द्रव्यकोटीनामीश्वराः अव-लिप्ता गर्व्विताः नन्दाः केन अन्येन मद्भिन्नेनेत्यात्मगर्व्वः। पर्य्यायभूताः पशव इव पशुपर्य्यायाः इव पश्यतो राक्षसस्य पश्यन्तं राक्षसमनादृत्य हताः निहताः न केनापीत्यर्थः।

(२) दीर्घनिष्कम्पपक्षैः दीर्घा आयताः निष्कम्पाः स्थिराश्च पक्षा येषां तैर्गृध्रैः वियति चलनया गत्या आबद्धचक्रं रचितचक्राकारवेष्टनं धूमैर्ध्वस्तार्कभासामाच्छादितरविकिरणानां दिशां मण्डलं सघनमिव दर्शयन्तः पितृवननिलयान् श्मशानःस्थान् प्राणिनः जन्तून् नन्दयन्तः

राजा । अन्येनैवेदमनुष्ठितम् ।

चाण । केन ।

राजा । नन्दकुलविद्वेषिणा दैवेनेदमनुष्ठितम् ।

चाण । दैवमविद्वांसः प्रमाणयन्ति (१) ।

राजा । विद्वांसोऽप्यविकत्थना भवन्ति ?

चाण । क्रोधं नाटयन् । वृषल ! वृषल ! भृत्यमिव मामारोढुमिच्छसि ।

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः—
भूमौ पादप्रहारं कृत्वा ।
प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।
प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना
परीतः कालेन, ज्वलयसि पुनः क्रोधदहनम् (२) ॥

राजा । सावेगं स्वगतम् । अये ! तत्कथं सत्यमेव (३) कुपित आर्य्यः । तथाहि

---

प्रीणयन्तः तत्र हेतुः नन्दानां स्रुतबहलवसावाहिन इति एते पुरो दृश्यमानाः हव्यवाहाः प्रेतक्षयप्रज्वालितवह्नयः अद्यापि न निर्वान्ति नोपशाम्यन्ति । सपुत्रनन्दानां बहुत्वात् तच्चितावह्नीनां बहुत्वम् ।

(१) अविद्वांसः दैवं भाग्यं प्रमाणयन्ति कार्य्योत्पत्तौ साधनतया अनुमिमते न विद्वांस इत्यर्थः ।

(२) कालेन मृत्युकालेन मृत्युना वा परीतः प्राप्तस्त्वम् नन्दानां प्रणाशात् दाह्याभावादित्यर्थः प्रशमं शान्तिमुपयातं प्राप्तं क्रोधदहनं कोपवह्निं पुनः ज्वलयसि उद्दीपयसि पुनरित्युक्तिः पूर्व्वं यत् दाह्यसम्पत्त्या दाहकत्वसम्भावनार्था ।

(३) सत्यमेवेत्युक्तिः चाणक्योपदेशेनैव कृतककोपस्य सम्पाद्यतया कलकलहे कथनस्य सत्यक्रोधता अतो नास्य सहिष्णुतेति भावः ।

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गो[ङ्गेद][द्भूत]धूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा ।
मन्ये, रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या,
सञ्जातोदग्रकम्पं कथमपि धरया धारितः पादघातः (१) ॥

चाण । कृतकं कोपं संहृत्य । वृषल ! वृषल ! अलमुत्तरोत्तरेण यद्यस्मत्तो वरीयान् राक्षसोऽवगम्यते, तस्मादिदं शस्त्रं तस्मै दीयतामिति । शस्त्रमुत्सृज्योत्थाय च प्रत्यक्षवदाकाशे लक्ष्यं बद्धा स्वगतम् । राक्षस ! राक्षस ! एष एव भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।

चाणक्यतः स्खलितभक्तिमहं सुखेन
जेष्यामि मौर्य्यमिति सम्प्रति यः प्रयुक्तः ।
भेदः, किलैष भवता सकलः, स एव
सम्पत्स्यते, शठ ! तवैव विनाशनाय (२) ॥

इति निष्क्रान्तश्चाणक्यः ।

---

(१) संरम्भात् कोपात् स्पन्दिनः चलतः पक्ष्मणः नेत्रलोम्नः क्षरतोऽमलजलस्य अश्रुणः क्षालनेन क्षामया क्षीणया पिङ्गया नेत्रभासा नयनदीप्त्या भ्रुभङ्गोद्भेदधूमं भ्रुवो भङ्गः कौटिल्यं तस्योद्भेद एव पाठान्तरे तस्मादुद्भूतो वा धूमो यस्य तादृशं पुनः ज्वलितं ज्वलनयुक्तं वह्निमिव ताण्डवे नृत्ये रौद्रं रसमभिनयतः रुद्रस्य कर्म्मणि षष्ठी संस्मरन्त्या पादाघातः पादप्रहारः चाणक्यस्येति शेषः संजातोदग्रकम्पं यथा स्यात् कथमपि धरया धरित्र्या धारित इति मन्ये उत्प्रेक्षे ।

(२) चाणक्यतः चाणक्यात् स्खलिता भक्तिरनुरागविशेषो यस्य तथाभूतं मौर्य्यं चन्द्रगुप्तं सुखेन अनायासेन जेष्यामीति बुद्ध्या भवता

राजा। आर्य्य! वैहीनर! अद्य प्रभृति अनादृत्य चाणक्यम्, चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति, गृहीतार्थाः प्रकृतयः क्रियन्ताम्।

कञ्चु। स्वगतम्। कथं निरुपपद एव चाणक्यो नार्य्यचाणक्य इति। हन्त सत्यमेव हृतोऽधिकारः। अथ वा न खल्वत्र वस्तुनि देवं दोषेणावगन्तुमर्हामि।

स दोषः सचिवस्यैव, यदसत् कुरुते नृपः।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् (१)॥

राजा। आर्य्य! किं विचारयसि?

कञ्चु। देव! न किञ्चिद्विचारयामि। किं त्वेतद्विज्ञापयामि दिष्ट्या देव इदानीं देवः संवृत्त इति।

राजा आत्मगतम्। एवमस्मासु निगृह्यमाणेषु स्वकार्य्यसिद्धि-कामः, सकामो भवत्वार्य्यः। प्रकाशम्। शोणोत्तरे, अनेन शुष्क-कलहेन शिरोवेदना मां बाधते, तच्छयनगृहमादेशय।

---

राक्षसेन यः प्रयुक्तः आपादितः भेदः अस्माकं परस्परभेदनव्यापारः एष भेदस्तवैव नाशनाय पराभवाय कृषि सम्पाद्यमाने इति चतुर्थी संपत्स्यते तच्चाग्रे स्फुटीभविष्यति।

(१) देवस्य दोषाभावो यदुक्तं तत् समर्थते स इत्यादि। नृपः यत् असत् कुरुते स नृपस्यासदाचरणं विधेयप्राधान्यात् पुंस्त्वम्। सचिव-स्यैव दोषः न नृपस्य। तत्र दृष्टान्तयति। यन्तः निषादिनः प्रमादेन गजो व्यालत्ववाच्यतां व्यालत्वेन हिंस्रत्वेन निन्दनीयतां याति। तथाच नृपतेः कुपथगमने सचिवेन निवारणं कर्त्तव्यं न तत्रोदासीनेन भवि-तव्यमित्यतश्चाणक्यस्यैवैषः दोषः न देवस्येत्यर्थः।

प्रती। एदु एदु महाराओ (१)।

राजा। आसनादुत्थायात्मगतम्।

आर्य्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्व्विवरं प्रवृत्ता।
ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा (२)॥

इति निष्क्रान्ताः सर्व्वे।

इति तृतीयोऽङ्कः।

---

(१) प्रतीहारी। एतु एतु महाराजः सं०।

(२) गुरोश्चाणक्यस्यावमाननाकरणे आत्मनोऽविनयमाशङ्क्य आह। आर्य्याज्ञयैवेति आर्य्यस्य चाणक्यस्य आज्ञयैव आदेशेनैव न स्वबुद्ध्या। लङ्घितगौरवस्य लङ्घितमतिक्रान्तं गौरवं चाणक्यसम्मानना येन तादृशस्य मम बुद्धिः अवनेर्भूमेर्विवरं छिद्रं प्रवेष्टुं प्रवृत्ता। एवमात्मनोऽविनये आर्य्याज्ञैव कारणमित्युक्त्वा अन्यथा गुरोरपमाननाकरणे दोषमाह। ये जनाः सत्यमेव न तु अहमिव मिथ्याकोपार्ज्जनायेत्यर्थः। गुरून् न प्रतिमानयन्ति सम्मानयन्ति नु वितर्के लज्जा तेषां हृदयं कथं न भिनत्ति अपितु विदारयत्येवेति तर्कयामीत्यर्थः।

इति श्रीतारानाथतर्कवाचस्पतिभट्टकृते मुद्राराक्षसव्याख्याने तृतीयाङ्कविवरणम्।

# मुद्राराक्षसम्।

## चतुर्थोऽङ्कः।

ततः प्रविशत्यध्वगवेशः पुरुषः।

पुरु। हीमाणहे, हीमाणहे (१)।

जोअणसअं समधिअं को णाम गदागदं इह करेइ।

अत्थाणगमणगुरुई पहुणो अण्णा जइ ण होइ॥

ता जाव अमच्चरक्खसस्स ज्जेव्व गेहं गच्छामि। परिश्रान्तवत्परिक्रम्य। भो को एत्थ दुआरिआणं निवेदेह दाव भट्टिणो अमच्चरक्खसस्स, एसो क्खु करहको करहका विअ कज्जं तुवरन्तो पाटलिपुत्तादो आगदोत्ति (२)।

---

(१) राक्षसेन पाटलिपुत्रनगरे स्थितं स्तनकलसवैतालिकं प्रति प्रेषितः करभकः शीघ्रं तत्र गत्वा तदुपदिष्टकार्य्यं विधाय प्रतिनिवृत्तः झटिति दूरगमनागमनयोर्हेतुतया प्रभोराज्ञां समर्थयमान आह हीमाणहे इति। आश्चर्यद्योतकनिपातः अतिशयद्योतनाय द्विरुक्तिः।

(२) योजनशतं समधिकं को नाम गतागतमिह करोति।

अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति सं०॥

अस्थाने अनुचितस्थाने गमनेन गुरुका अनुल्लङ्घनीया गुर्वी यदि प्रभोः

प्रविश्य । दौवारिकः । भद्द ! मा उच्चं मन्तेहि, एसो क्खु भट्टा अमच्चरक्खसो रज्जचिन्ताजणिदेण जाअरेण समुप्पणसीसवेअणो; अज्ज वि दाव ण सअणदलं मुञ्चदि, ता चिट्ठ ताव मुहुत्तअं, जाव से लद्धावसरो भविअ, भवदो आगमणं णिवेदेमि(१)।

पुरु । भद्दमुह ! जधा दे रोअदि [तथा करेहि] अधि०(२) ।

ततः प्रविशति शयनगतश्चासनगतेन शकटदासेनानुगम्य मानश्चिन्तितो राक्षसः ।

राक्ष । आत्मगतम् ।

मम विमृशतः कार्य्यारम्भे विधेरविधेयतां
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम् ।

---

स्वामिनः आज्ञा न भवति तदा समधिकं सङ्गतमधिकं यत्र "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप" इति गतपदलोपी बहुव्रीहिः । साधिकमित्यर्थः योजनशतं व्याप्य को नाम न कोपीत्यर्थः गतागतं करोति । तथाच साधिकयोजनशतगमनागमनयोः प्रभोराज्ञैव तन्त्रमिति भावः । गतागतमिति भावे क्तः समाहारद्वन्द्वः ।

तद्यावत् अमात्यराक्षसस्यैव गेहं गच्छामि । भोः कोऽत्र दौवारिकाणाम् निवेदय तावद्भर्तुरमात्यराक्षसस्य, एष खलु करभकः करभक इव कार्य्यं त्वरयन् पाटलिपुत्त्रादागत इति सं० ।

(१) भद्र! मा उच्चं मन्त्रय एष खलु भर्त्ता अमात्यराक्षसः राज्यकार्य्यचिन्ताजनितेन जागरेण समुत्पन्नशीर्षवेदनोऽद्यापि तावत् न शयनतलं मुञ्चति ; तस्मात्तिष्ठ तावन्मुहूर्त्तं, यावत्तस्य लब्धावसरो भूत्वा, भवत आगमनं निवेदयामि सं० ।

(२) पुरुषः । भद्रमुख! यथा ते रोचते सं० । अधिकपाठे [तथा कुरु]

अथ च विहते तत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः (१)॥

अपि च।

कार्य्योपक्षेपमादौ, तनुमपि रचयंस्तस्य विस्तारमिच्छन्,
वीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च,।
कुर्व्वन् बुद्ध्या विमर्षं प्रसृतमपि, पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा(२)॥

---

(१) कार्य्यारम्भे कार्य्यसाधनाय तदुद्दिश्येत्यर्थः। विधेर्भाग्यस्य अविधेयताम् अनियोज्यताम् अस्वाधीनतामिवि यावत् विमृशतः भाग्यस्यैव सर्व्वमधीनं न तु भाग्यं कस्याप्यधीनमिति चिन्तयतः। सहजकुटिलां निसर्गतो वक्रां दुरधिगमामिति यावत्। कौटिल्यस्य चाणक्यस्य मतिं बुद्धिं प्रचिन्तयतः तदुद्भावितविषयदर्शनेन लक्षयतः। अथ तत्कृत्यानां चाणक्यस्योपक्रान्तविषयेषु यानि कृत्यानि कर्त्तव्यानि तेषामुपग्रहे उपाये निवारणोपाये अस्माभिरनुष्ठिते इति शेषः। सामादौ विहते चाणक्येण स्वबुद्ध्या अपसारिते इह विषये इदम् यत् प्रस्तुतं तद्विपरीतं कथं जातमिति अनिशं सदा चिन्तयतः अतएव उन्निद्रस्य चिन्तावशात् उद्गता निद्रा यस्य तादृशस्य निद्रारहितस्य मम निशाः रात्रयः यान्ति तत्तद्विषयचिन्तया जाग्रतैव मया बह्व्यो निशा यापिता इत्यर्थः।

(२) नाटकविधानसाम्येन स्वकृत्यं वर्णयन्नाह कार्य्योपेत्यादि। आदौ प्रथमं तनु स्वल्पमपि कार्य्यस्य कर्त्तव्यस्य शत्रुजयात्मकव्यापारस्य उपक्षिप्यते आरभ्यतेऽनेन उपक्षेपः सामाद्युपायस्तं रचयन् प्रयुञ्जान इत्यर्थः तस्य कार्य्यस्य विस्तारमिच्छन् गर्भितानां जातगर्भाणां वीजानां साधनानां गूढ़ं प्रागनभिव्यक्तत्वात् गुप्तं फलम् अतिगहनं दुर्बोधं यथा तथा उद्भेदयन् प्रकाशयन् बुद्ध्या विमर्षम् इदमित्यं कर्त्तव्यं न वेति 'सन्दिह्य वन्निर्णयायालोचनं कुर्वन् प्रसृतं विस्तीर्णमपि कार्य्यजातं उपसंहरन्

तदपि नाम दुरात्मा चाणक्यवटुः-

उपसृत्य । दौवारिकः । जअदु, जअदु (१) ।

राज । अभिसन्धातुं शक्यः स्यात्-

दौवा । अमच्चो (२) ।

---

प्रकाशभिया सङ्कोचयन् नाटकानां कर्त्ता कविः अस्मद्विधोऽस्मादृशो जनस्य क्लेशमनुभवति । नाटककर्त्ता च कार्य्यस्य अभिनेयस्य आदौ 'यत्र वीज-समुत्पत्तिर्नानार्थरसम्भवा । प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तित'-मित्युक्तलक्षणे मुखे, कार्य्यस्य अभिनेयकाव्यार्थस्य तनुं स्वल्पमपि उपक्षेपम् 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृत' इत्युक्तलक्षणं मुखाङ्गं रचयन् तस्य विस्तारं 'समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुन' रित्युक्तलक्षणं परिकरम् इच्छन् गर्भितानां जातगर्भाणाम् 'फलप्रधानोपायस्य प्राग्-द्भिन्नस्य किञ्चन । गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः' रित्युक्त-लक्षणगर्भवतां वीजानाम् 'अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति । 'फलस्य प्रथमोपायो वीजमित्यभिधीयते' इत्युक्तलक्षणानां फलप्रधान-हेतूनां अतिगहनम् अतिदुर्बोधं फलं गूढं यथा तथा उद्भेदयन् कार्य्या-वस्थतया प्रकाशयन् विवृतं विस्तीर्णमपि कार्य्यजातम् बुद्ध्या 'यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायैश्च स विमर्ष इति स्मृत' इत्युक्तलक्षणम् विमर्षं कुर्वन् संहरन् 'वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तदित्युक्त-लक्षणनिर्वहणरूपमुपसंहारं कुर्वन् काव्यार्थरचनप्रयासजनितं ताप-मनुभवति इत्युभयोः साम्यम् ।

(१) दौवारिकः । जयति जयति सं० ।

(२) दौवारिकः । अमात्यः सं० ।

राच। वामाक्षिस्पन्दं सूचयित्वा आत्मगतम्। चाणक्यवटुर्जयति; अभिसन्धातुं शक्यः स्यादमात्य इति वामाक्षिस्पन्देन प्रस्तावगतं प्रतिपादयति। [तथापि नोद्यमस्त्याज्यः।अ०]। प्रकाशम्। भद्र! किमसि वक्तुकामः।

दौवा। अमच्च! एसो क्खु करहओ पाडलिपुत्तादो आअदो, इच्छदि अमच्चं पेक्खिदुं (१)।

राच। अवारितं प्रवेशयैनम्।

दौवा। जं अमच्चो आणवेदि त्ति। निष्क्रम्य पुरुषमुपसृत्य। भद्र! एसो अमच्चो चिट्ठदि, ता उपसप्प णं (२)।

इति निष्क्रान्तो दौवारिकः।

कर। राक्षसमुपसृत्य। जअदु, जअदु, अमच्चो (३)।

राच। नाट्येनावलोक्य। भद्र! करभक! स्वागतमुपविश्यताम्।

कर। जं अमच्चो आणवेदि त्ति (४)। भूमावुपविशति।

राच। स्वगतम्। अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधिः प्रहित इति; प्रभूतत्वात् प्रयोजनानां न खल्ववधारयामि।

इति चिन्तां नाटयति।

---

(१) दौवारिकः। अमात्य! एष खलु करभकः पाटलिपुत्त्रादागतः इच्छति अमात्यं प्रेक्षितुम्। सं०।

(२) दौवारिकः। यदमात्यः आज्ञापयति। भद्र! एष खलु अमात्यस्तिष्ठति, तदुपसर्प एनम्। सं०।

(३) करभकः। जयति जयति अमात्यः। सं०।

(४) करभकः। यदमात्य आज्ञापयति। सं०

ततः प्रविशति वेत्रपाणिरपरः पुरुषः ।

पुरु। ओसलध, अज्जा ! ओसलध; अवेध, माणहे ; अवेध, किं ण पेक्खध;

दूले पच्चासत्ती दंसणमवि दुल्लहं अधखेहिं ।
कल्लाणकुलघराणं देवाणञ्च भूमिदेवाणं ॥

आकाशे। अज्जा ! किं भणाध, किं णिमित्तं एसा ओसालणा करीअदि। अज्जा ! एसो क्खु कुमालो मलयकेदु, समुप्पस्सीसवेअणं अमच्चरक्खसं सुणिअ, पेक्खिदुं इह ज्जेव्व आअच्छदि। एदिणा कालणेण ओसालणा करीअदि (१)। इति निष्क्रान्तः पुरुषः ।

ततः प्रविशति भागुरायणेन सह कञ्चुकिनानुगम्यमानो मलयकेतुः ।

मल। निश्वस्यात्मगतम्। अद्य दशमो मासस्तातस्योपरतस्य,

---

(१) पुरुषः ! अपसरत, हे आर्य्याः अपसरत। अपेत, हे मान्याः ! अपेत ; किं न पश्यत ।

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः ।
कल्याणकुलगृहाणां देवानाञ्च भूमिदेवानाम् सं० ॥

कल्याणगृहाणां मङ्गलास्पदानां देवानां भूमिदेवानां नृपाणाञ्च अधन्यैः अपुण्यवद्भिर्नरैः प्रत्यासत्तिः नैकट्यसम्बन्धः दूरे आस्तां दर्शनमपि दुर्लभम्। हे आर्य्याः ! किं भणथ, किं निमित्तमेषा अपसारणा क्रियते। आर्य्याः ! एष खलु कुमारो मलयकेतुः, समुत्पन्नशीर्षवेदनममात्यराक्षसं श्रुत्वा, प्रेक्षितुम् इत एव आगच्छति। एतेन कारणेन अपसारणा क्रियते सं० ।

नचास्माभिर्यथापुरुष[षाभिमान]कारं,सुहृद्दङ्गिस्तमुद्दिश्य, तोयाञ्जलिरप्यावर्ज्जितः अथ वा प्रतिज्ञातमेतत् पुरस्तात्

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकम्।
तादृङ्मातृजनस्य शोकजनितं सम्प्रत्यवस्थान्तरम्;
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः (१)॥

तत्किमिह बहुना।

उद्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविहितेन पितुःपथा वा।
आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः (२)॥

प्रकाशम्। आर्य्य! जाजले! उच्यन्तामस्मद्वचनादनुयायिनो राजानः, एकएवाहममात्यराक्षसस्यातर्कितागमनेन प्रीतिमुत्पादयितुमिच्छामि; अतः कृतमनुगमनक्लेशेनेति।

---

(१) भूरेणुभिः धूलिभिः रूक्षा अचिक्कणा अलका यत्र मातृजनस्य तादृक् अनुभूतम् अवस्थान्तरं दशान्तरं तत्तुल्यदशान्तरं शत्रुस्त्रीषु विषये विधाय कृत्वा गुरवे पित्रे निवापाञ्जलिः "पितृदानं निवापः स्या"दित्युक्तश्राद्धाङ्गं जलाञ्जलिर्देयः।

(२) अकापुरुषानुरूपां वीरपुरुषोचितां धुरं भारमुद्यच्छता उद्वहता मया आजिविहितेन रणकृतेन पितुः पितृगतेन पथा मरणरूपेण गन्तव्यम् पितुराजिमरणाभावेऽपि तस्य मरणरूपपथ इह विवक्षितः स्वमरणप्रकारकथनायैव आजिविहितेनेत्युक्तम्। स्वजननीजनलोचनेभ्य आच्छिद्य आहृत्य बाष्पमित्यर्थात् रिपुवधूनयनानि बाष्पो नेयः नयतेः मुख्यकर्म्मणि "प्रधाने नीहृकृष्वह्वां द्विकर्म्मणाम्"इत्युक्तेः यत्।

कञ्चु । यदाज्ञापयति कुमारः । परिक्रम्याकाशे । भो भो राजानः, कुमारः समाज्ञापयति, न खल्वहं केनचिदनुगन्तव्यः । इति विलोक्य सहर्षम् । कुमार ! कुमार ! एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्व्वएव राजानः, पश्यतु हि कुमारः ।

सोत्सेधैः स्कन्धदेशैर्मुखरकविकयाकर्षणात्यर्थभुग्नै
रश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात् ।
केचिन्मातङ्गमुख्यैर्व्विहृतजवतया मूकघण्टैर्निवृत्ताः
मर्य्यादां भूमिपाला जलधयइव ते देव ! नोल्लङ्घयन्ति (१) ॥

मल । आर्य्य ! जाजले, ! त्वमपि सपरिजनो निवर्त्तस्व, भागुरायण एकएव मामनुगच्छतु ।

कञ्चु । यदाज्ञापयति कुमारः । इति सपरिजनो निष्क्रान्तः ।

मल । सखे ! भागुरायण ! विज्ञापितोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभिः, यथा न वयम् अमात्यराक्षसद्वारेण कुमारमाश्रयामहे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य, दुष्टामात्यपरिगृहीताच्चन्द्रगुप्तादपरक्ताः सन्तः कुमारमाभिरामि

---

( १ ) मुखरया शब्दायमानया कविकया खलिन्या आकर्षणेन अत्यर्थभुग्नैः अतिकुटिलैः सोत्सेधैः उच्चैः स्कन्धदेशैरुपलक्षिताः खुरपुटैः खमाकाशमिव पुरस्तात् खण्डयन्तः अश्वा कैश्चित् नृपैर्निरुद्धाः । विहृतजवतया निवारितवेगतया मूकघण्टैः अचञ्चलतया निवृत्तघण्टारवैः मातङ्गमुख्यैः गजश्रेष्ठैः विशिष्टाः इति शेषः । केचित् भूमिपालाः निवृत्ता अतः भूमिपाला राजानः जलधयः मर्य्यादां वेलामिव तवाज्ञां नोल्लङ्घयन्ति नातिक्रामन्ति । अप्रतिहताज्ञतया सर्व्वेऽपि ते वशीभूता इति भावः । अत्र मातङ्गाश्वादीनां स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः ।

कगुण[योगादा][युक्तमा]श्रयणीयमाश्रयामह इति, तन्न मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः ।

भागु । कुमार ! नैवायमत्यन्तदुर्ब्बोधोऽर्थः; पश्य, विजिगीषु रात्मगुणसम्पन्नः प्रियहितद्वारेणाश्रयणीयमाश्रयेदिति ननु न्याय्य एवायम् ।

मल । सखे ! भागुरायण ! नन्वस्माकममात्यराक्षसः प्रियतमो, हिततमश्च ।

भागु । कुमार ! एवमेतत् किन्तु अमात्यराक्षसश्चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते, तद्यदि कदाचिच्चन्द्रगुप्तश्चाणक्यमतिजितकाशिनमसहमानः साचिव्यादवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वयएवायमिति कृत्वा, संपत्सुहृज्जनापेक्षया च, अमात्यराक्षसश्चन्द्रगुप्तेन सह सन्दधीत; चन्द्रगुप्तोऽपि पितृपारम्पर्य्यागतएवायमिति कृत्वा, सन्धिमनुमन्येत; एवं सत्यस्मास्वपि कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः ।

मल । युज्यते । सखे ! भागुरायण! अमात्यराक्षसस्य गृहमार्गमादेशय ।

भागु । इतइतः कुमारः । इति उभौ परिक्रामतः ।

भागु । कुमार, इदममात्यराक्षसस्य गृहं, प्रविशतु कुमारः ।

मल । एष प्रविशामि । इति प्रवेशनं नाटयतः ।

राक्ष । आः स्मृतम् । प्रकाशम् । भद्र ! अपि दृष्टस्त्वया कुसुमपुरे वैतालिकः स्तनकलसः ।

कर । अमच्च ! अध इं (१) ।

---

(१) करभकः । अथ किम् सं० ।

मल। सखे! भागुरायण! कुसुमपुरवृत्तान्तो वर्त्तते, तन्नोपसर्प्पावः; शृणुवस्तावत् किङ्कारणमिति।

मन्त्रभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः (१)॥

भागु। यदाज्ञापयति कुमारः।

राच। भद्र! अपि तत्कार्य्यं सिद्धम्।

कर। अमच्चस्स पसाएण सिद्धम् (२)।

मल। सखे! भागुरायण! किं तत्कार्य्यम्?

भागु। कुमार! गहनः खलु सचिववृत्तान्तो, नैतावता परिच्छेत्तुं शक्यते। अवहितस्तावत् श्रोतुमर्हति कुमारः।

राच। भद्र! विस्तरेण श्रोतुमिच्छामि।

कर। सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो, जधा, करभअ! करभअ! कुसुमपुरं गच्छिअ, भणिदव्वो मम वअणेण तुए वैतालिओ त्थणकलसो, जधा, चाणक्कहदएण तेसुं तेसुं आणाभङ्गेसुं अणुचिट्ठीअमाणेसुं, चन्दउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वो त्ति (३)।

---

(१) अन्यथा विवृतार्थेषु अन्यप्रकारेण विवृतः प्रकटितोर्थो येषां तादृशेषु स्वैरालापेषु स्वैरकथनेषु मन्त्रिणः राज्ञां समीपेषु अन्यथा कथयन्ति तत्र हेतुः मन्त्रभङ्गभयादिति मन्त्रस्य मन्त्रणीयकार्य्यस्य भङ्गात् यद्भयं तस्मात् तथा च अन्यथास्थितवस्तुनोन्यथाकथनमेव अमात्यधर्म्म इति भावः।

(२) करभकः। अमात्यस्य प्रसादेन सिद्धम सं०।

(३) करभकः। शृणोतु अमात्यो अस्ति तावत् अहममात्येनाज्ञप्तो यथा करभक! करभक! कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो

राक्ष। ततस्ततः ?

कर। तदो मए पाडलिउत्तं गच्छिअ, सुणाविदो अमच्चस्स सन्देसो वेतालिओ त्थणकलसो (१)।

राक्ष। ततस्ततः ?

कर। एत्थन्तरे णन्दकुलविणासदुम्मणस्स पोरजणस्स परिओसं समुप्पाअन्तेण चन्दउत्तेण आघोसिदो, कुसुमउरे, कोमुदीमहोस्सवो; सोवि चिरआलपवत्तमाणजणिदपरिओसो; अहिमदबन्धुजणसमागमो विअ, ससिणेहं बहुमाणिदो णअरजणेण (२)।

राक्ष। सवाष्पम्। हा देव! नन्द!

कौमुदीकुमुदानन्दे जगदानन्दहेतुना।

कीदृशी सति चन्द्रेऽपि नृपचन्द्र! त्वया विना (३)।

भद्र! ततस्ततः ?

---

वैतालिकः स्तनकलसः यथा चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्य इति सं०।

(१) करभकः। ततो मया पाटलिपुत्रं गत्वा, श्रावितः अमात्यसन्देशं वैतालिकः स्तनकलसः सं०।

(२) करभकः। अत्रान्तरे नन्दकुलविनाशदुर्म्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेन आघोषितः, कुसुमपुरे, कौमुदीमहोत्सवः; सोऽपि चिरकालप्रवर्त्तमानजनितपरितोषः, अभिमतबन्धुजनसमागम इव, सस्नेहं बहुमानितः नगरजनेन सं०।

(३) हे नृपचन्द्र! जगदानन्दहेतुना त्वया विना कुमुदानन्दे कुमुदानां कैरवाणां कुत्सितमुदायुक्तानां कुजनानाञ्च प्रकाशकत्वात् रञ्जनाच्च आनन्दे आनन्दजनके चन्द्रे विधौ चन्द्रगुप्ते च सत्यपि कौमुदी कौमुदीमहोत्सवः कीदृशी भवेत् नैव सुखायेत्यर्थः चन्द्रगुप्तस्य कुत्सितहर्षवतां

कर। अमच्च ! तदो सो लोअलोअणानन्दभूदो अणिच्छन्तस्स ज्जेव तधा णाअरजणस्स णिवारिदो चाणक्कहदकेण कौमुदीमहोस्सवो; एत्यन्तरे त्थणकलसेण पउत्ता चन्दउत्तस्स समुत्तेअणसमत्था सिलोअपरिवाटी (१)।

राक्ष। सहर्षम्। साधु, सखे! स्तनकलस! साधु, काले भेदवीजमुप्तमवश्यमेव फलमुपदर्शयिष्यति। यतः।

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत्;

किमु लोकाधिकं धाम विभ्राणः पृथिवी[भुजः][पतिः] (२)॥

मल। एवमेतत्। सद्यः क्रीडेत्यादि पुनः पठति।

राक्ष। ततस्ततः?

कर। तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइरं अमच्चगुणं पसंसिअ पब्भसिओ; अहिआरादो चाणक्कहदओ (३)।

---

हर्षकारकत्वात् तव च जगदानन्दहेतुत्वात् युवयोरतीव वैषम्यमिति भावः।

(१) अमात्य! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव तथा नागरजनस्य निवारितश्चाणक्यहतकेन कौमुदीमहोत्सवः; अत्रान्तरे स्तनकलसेन प्रवर्त्तिता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी सं०।

(२) प्राकृतः क्षुद्रोऽपि जनः सद्यो हठात् कारणं विनेत्यर्थः क्रीडारसच्छेदं क्रीडायां यो रसः रागः तस्य छेदं भङ्गं न मर्षयेत् किमु लोकाधिकं धामः तेजः विभ्राणः धारयन् पृथिवीभुजः [पतिः] राजा किमु मर्षयेत् अपितु नेव सहेत।

(३) ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितहृदयेन, सुचिरममात्यगुणं प्रशस्य, प्रभ्रंशितोऽधिकारात् चाणक्यहतकः सं०।

मल। सखे! भागुरायण! गुणप्रशंसया, दर्शितश्चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः।

भागु। कुमार! न तथा गुणप्रशंसया, यथा चाणक्यवटो र्निराकरणेन।

राक्ष। भद्र! किमयमेवैकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्र गुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति।

मल। सखे! भागुरायण! चन्द्रगुप्तस्य अपरकोपकारणा न्वेषणे किं फलमेव पश्यति?

भागु। कुमार! एतत् फलं पश्यति, अतिमतिमांश्चाणक्यः, निष्प्रयोजनमेव किमिति चन्द्रगुप्तं कोपयिष्यति; न च कृतवेदी चन्द्रगुप्त एतावता गौरवमुल्लङ्घयिष्यति; सर्व्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात्कारणाद्यो विश्लेष उत्पद्यते, स आत्यन्तिको भविष्यतीति।

कर। अमच्च! अत्थि अस्सदं पि चन्दउत्तस्स कोवका रणाइं चाणक्के (१)।

राक्ष। किं किम्?

कर। जधा, पढमं दाव उवेक्खिदो अणेण अवक्कमन्तो कुमारो मलयकेदू अमच्चरक्खसो अ (२)।

राक्ष। सहर्षम्। सखे! शकटदास! हन्त हस्ततलगतः सम्प्रति चन्द्रगुप्तो भविष्यति।

---

(१) अमात्य! अस्ति अन्यदपि कोपकारणं चाणक्ये सं०।

(२) यथा प्रथमं तावदुपेक्षितः अनेनापक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च सं०।

शक। इदानीं चन्दनदासस्य बन्धनान्मोक्षः, भवतां च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः।

भागु। आत्मगतम्। जातः सत्यं जीवसिद्धेः क्लेश च्छेदः।

मल। सखे! भागुरायण! हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यतीति व्याहरतः, कोऽयमस्याभिप्रायः?

भागु। किमन्यत्, चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणे सौकार्य्यमवश्यमवगच्छति।

राक्ष। भद्र! हृताधिकारः साम्प्रतं क्वासौ वटुः?

कर। तहिंज्जेव्व पाड़लिपुत्ते पड़िवसदि (१)।

राक्ष। सावेगम्। भद्र! तत्रैव प्रतिवसति न तपोवनं गतः; प्रतिज्ञां वा न पुनः समारूढवान्।

कर। अमच्च! तपोवणं गमिस्सदित्ति सुणीअदि (२)।

राक्ष। सावेगम्। शकटदास! नेदमुपपद्यते। पश्य;

देवस्य येन पृथिवीतलवासवस्य,
साग्रासनापनयजा निकृतिर्न सोढा।
सोऽयं स्वयंकृतनराधिपतेर्मनस्वी,
मौर्य्यात् कथं नु परिभूतिमिमां सहेत (३)॥

---

(१) तस्मिन्नेव पाटलिपुत्रे प्रतिवसति सं०।

(२) अमात्य! तपोवनं गमिष्यतीति श्रूयते सं०।

(३) पृथिवीतलवासवस्य भूमीन्द्रस्य देवस्य नन्दस्य कर्त्तरि षष्ठी। कृतेत्यर्थः। साग्रासनापनयजा साग्रासनात् श्राद्धभोजनार्थकल्पितश्रेष्ठासनात् अपनयोऽपसारणं तस्माज्जाता निकृतिः पराभवः येन चाणक्येन न सोढ़ा। सोऽयं मनस्वी अभिमानी चाणक्यः स्वयंकृतनराधिपतेः स्वयंदत्तराज्यात् मौर्य्यात् चन्द्रगुप्तात् पराभवं कथं सहेत।

मल । सखे ! भागुरायण ! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा कास्य स्वार्थसिद्धिः ।

भागु । कुमार ! नायमत्यन्तदुर्बोधोऽर्थः, यावद्यावन्निरपेक्ष श्चाणक्यहतकश्चन्द्रगुप्ताद्दूरीभवति तावत्तावदस्य स्वार्थसिद्धिः।

शक । अमात्य, अलमत्यन्तविकल्पितेन ; एतदुपपद्यतएव कुतः पश्यत्वमात्यः

राज्ञां चूड़ामणीन्दुद्युतिखचितशिखे मूर्द्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातम् ।
कौटिल्यः कोपनोऽपि स्वयमतिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः (१) ॥

राच । सखे ! शकटदास ! एवमेतत् तद्गच्छ विश्रामय करभकम् ।

---

भूमीन्द्रकृतपराभवमपरासहिष्णोः स्वदत्तराज्यात् नृपतेः पराभवसहनं न कथमपि समुचितमित्यर्थः ।

(१) चूडामणीन्दुद्युतिखचितशिखे चूडामणिः इन्दुरिव प्रकाशकत्वात् तस्य द्युतिभिः खचिता सम्बद्धा शिखा यस्य तादृशे राज्ञां मूर्द्ध्नि मस्तके न्यस्तपादः अर्पितचरणः मौर्य्यः स्वैरेव स्वकीयैरेवामात्यैः उत्पाद्यमानं निष्पाद्यमानं आज्ञाविघातम् आज्ञाभङ्गं किमिति विषहते । कौटिल्यः चाणक्यः अतिकोपनोऽपि अतिचरणे प्रतिज्ञाऽपूरणे आत्मना स्वयं ज्ञातदुःखः दैवात् भाग्येन पूर्णप्रतिज्ञः सन् इदानीं आयतिज्यानिभीतः आयतेर्भाग्यस्य ज्यानिर्हानिस्तस्या भीतः इदानीं भाग्यमस्ति नवेति सन्दिह्य पुनरपि प्रतिज्ञां न करोति । पूर्व्वप्रतिज्ञायाः अप्रतिपालने दुःखातिशय्यम् अनुभूय पूर्व्वप्रतिज्ञयायाश्च दैवात् पूर्णत्वं मन्यमानः इदानीं दैवस्य हानिशङ्कया पुनः प्रतिज्ञा न करोतीत्याशयः ।

शक । यदाज्ञापयत्यमात्य इति । करभकेण सह निष्क्रान्तः ।

राक्ष । अहमपि कुमारं द्रष्टुमिच्छामि ।

मल । अहमेवार्य्यं द्रष्टुमागतः ।

राक्ष । नाश्येनावलोक्य । अये कुमार एवागतः । आसनादुत्थाय । इदमासनमुपवेष्टुमर्हति कुमारः ।

मल । अहमुपविशामि ; उपविशत्वार्य्य । इति यथासनमुपविष्टौ ।

मल । आर्य्य ! अपि सह्या शिरोवेदना ?

राक्ष । कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे, कुतः शिरोवेदनायाः सह्यता ?

मल । स्वयमुरीकृतमेतदार्य्येण न दुष्प्रापं भविष्यति ; तत् कियन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसनमवेक्षमाणै-रुदासितव्यम् ?

राक्ष । कुमार ! कुतोऽद्यापि कालहरणस्यावकाशः ? प्रतिष्ठस्व रिपुजयाय ।

मल । अमात्य ! अपि किञ्चित् शत्रोर्व्यसनमुपलब्धम् ?

राक्ष । गाढमुपलब्धम् ।

मल । कीदृशम् ?

राक्ष । सचिवव्यसनं ; किमन्यत् व्यसनं ; अपकृष्टश्चाणक्या-च्चन्द्रगुप्तः ।

मल । अमात्य ! सचिवव्यसनमव्यसनमेव ।

राक्ष । कुमार ! अन्येषां भूपतीनां कदाचिदमात्यव्यसन-मव्यसनमपि स्यात्, न पुनश्चन्द्रगुप्तस्य ।

मल । आर्य्य ! ननु विशेषतश्चन्द्रगुप्तस्येति ।

राक्ष । किं कारणं यदस्यामात्यव्यसनमव्यसनम् ।

मल। चेन्द्रगुप्तप्रकृतीनां हि चाणक्यदोषा एवापरागहेतवः तस्मिन्निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतय, इदानीं पुनः सुतरामेव तत्रानुरागं दर्शयिष्यन्ति।

राच। कुमार! [नैतदेवं] [नैवेदं]; इह द्विप्रकाराः प्रकृतयश्चन्द्रगुप्तसहोत्थायिन्यो, नन्दकुलानुरक्ताश्च; तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृतीनां चाणक्यदोषा एव विरागहेतवो, न नन्दकुलानुरक्तानां; तासु खलु नन्दकुलमनेन पितृकुलभूतं कृतघ्नं कृतघ्नेन घातितमित्यपरागामर्षाभ्यां विप्रकृताः सत्यः; स्वाश्रयमलभमानाश्चन्द्रगुप्तमेवानुवर्त्तन्ते; त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिमभियोक्तारमासाद्य, क्षिप्रमेनं परित्यज्य, त्वामेवाश्रयन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्।

मल। अमात्य! किमेतदेवैकं सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्य? आहोस्विदन्यदप्यस्ति।

राच। कुमार! किमन्यैर्बहुभिरपि, एतद्धि तत्र प्रधानतमम्।

मल। अमात्य! कथं प्रधानतमं नाम; किमिदानीं चन्द्रगुप्तः स्वराज्यकार्य्यधुरामन्यत्र मन्त्रिण्यात्मनि वा समासज्य, स्वयं प्रतिविधातुमसमर्थः स्यात्?

राच। वाढमसमर्थ एव।

मल। किङ्कारणम्?

राच। स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु(१)वा भूमिपालेषु

(१) स्वायत्तसिद्धिषु स्वाधीनस्वकार्य्यचिन्तनेषु उभयोःआत्ममन्त्रिणोरायत्ता सिद्धिर्येषां तादृशेषु वा भूमिपालेषु।

कदाचिदेतत् सम्भवति, न तु चन्द्रगुप्ते । चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धावेवावस्थितश्चक्षुर्विकल इवाप्रत्यक्षसर्व्वलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् । कुतः,

अत्युच्छ्रिते मन्त्रिणि, पार्थिवे च, विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति (१) ॥

अपि च ।

नृपोऽपकृष्टः सचिवात्तदर्पणात्स्तनन्धयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमूढधीर्मुहूर्त्तमप्युत्सहते न वर्त्तितुम् (२) ॥

मल । आत्मगतम् । दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि (३) ।

---

(१) श्रीः राजलक्ष्मीः अत्युच्छ्रिते अत्युन्नते कार्य्यक्षमे च मन्त्रिणि सचिवे, पार्थिवे च पादौ अवष्टभ्य स्थापयित्वा उपतिष्ठते उच्छ्रयति उत्थिता भवति उत्तिष्ठतीत्यर्थः ऊर्द्धोत्थितौ हि अत्युच्चालम्बनमेव हेतुः तद्विना ऊर्द्धोत्थानासम्भवादिति भावः । स्त्रीस्वभावात् तयोः नृपे सचिवे च उभयोः भरस्य असहा सा श्रीः एकतरं तयोरित्यनुषङ्गः जहाति त्यजति ।

(२) अत्यन्तशिशुः स्तनन्धयः स्तनादिव सचिवात् तत्प्रतिपाल्यत्वात् अपकृष्टः तदर्पणात् तस्मिन् सचिवेऽर्पणं राज्यचिन्ताया भारार्पणं यस्य तादृशः नृपः मुहूर्त्तमपि वर्त्तितुं व्यवहर्त्तुं न उत्सहते तत्र हेतुः अदृष्टलोकव्यवहारमूढधीरिति न दृष्टो लोकव्यवहारो येन अतएव मूढा मन्दा धीरस्य यतस्तथाभूतः अतो नोत्सहते इत्यर्थः ।

(३) सचिवस्यायत्तं तन्त्रं राज्यचिन्ता यस्य तथाभूतो यन्नाहं तत् दिष्ट्या भाग्येनैवेत्यर्थः ।

प्रकाशम् । अमात्य! यद्यप्येवं तथापि खलु बह्वभियोगकारणेषु सत्सु, सचिवव्यसनमभियुञ्जानस्य शत्रुमभियोक्तुर्नैकान्तिकी सिद्धिर्भवति ।

राज । ऐकान्तिकीमेव सिद्धिमवगन्तुमर्हति कुमारः । कुतः,

त्वय्युत्कृष्टबले, ऽभियोक्तरि नृपे, नन्दानुरक्ते पुरे
चाणक्ये चलिताधिकारविमुखे, मौर्य्ये नवे राजनि ।
स्वाधीने मयि— । इत्यर्द्धोक्ते लज्जां नाटयन् ।
—मार्गमात्रकथनव्यापारयोगोद्यमे
त्वद्वाञ्छान्तरितानि सम्प्रति विभो ! तिष्ठन्ति साध्यानि नः(१) ॥

मल । अमात्य! यद्येवमभियोगकालममात्यः पश्यति, तत्किमास्यते । पश्य

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम् ।

---

(१) उत्कृष्टबले, उत्तमसामर्थ्ये समर्थसैन्ये च नृपे त्वयि अभियोक्तरि युद्धार्थमुद्यते सति, चाणक्ये चलितोऽधिकारो राज्यचिन्ताभारो यस्मात् तथाभूते अतएव विमुखे सति, नन्दानुरक्ते पुरे नगरे-मौर्य्ये चन्द्रगुप्ते नवे राजनि सति, स्वाधीने तवेत्यर्थात् वशीभूते मयि मार्गमात्रस्य युद्धपथमात्रस्य कथनरूपे व्यापारयोगे उद्यमो यस्य तादृशे सति । हे विभो! सम्प्रति नः अस्माकं साध्यानि अभीष्टानि त्वद्वाञ्छान्तरितानि तव वाञ्छैव अन्तरिता अवकाशकारिणी व्यवधानकारिणी च येषां तादृशानि तिष्ठन्ति । अभीष्टानि तव वाञ्छामात्रसापेक्षाणीत्यर्थः अत्र मयीति आत्मनः स्वाधीनत्वकथनद्वारा आत्मनो गर्वः स्यात् इत्याशङ्क्य लज्जा प्रदर्शिता ।

स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः (१) ॥

अपिच ।

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्र
मासारवर्षमिव सीकरमुद्गिरन्त्यः ।
विन्ध्यं विकीर्णसलिलाइव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीयाः (२)॥

इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ।

---

(१) वैरिपुरमर्द्दनाय प्रस्थानस्योचितत्वेऽपि केन कस्याक्रमणं विधेय-मिति दर्शयितुं तुल्यरूपेण तुल्यरूपस्यैवाक्रमणमुचितमित्यत्र तुल्यविशेष-णान्वितस्य शोणनदस्य तत्तुल्यमद्गजपतिभिरेवाक्रमणं करिष्यते इत्याह उत्तुङ्गा इत्यादि । सिन्दूरशोणा सिन्दूरेण कृतशोणिमानः मम शतशः गजपतयः शोणं पाटलिपुत्रसमीपस्थनदभेदं तुल्यरूपत्वात् पास्यन्ति अभिभविष्यन्तीत्यर्थात् एवं उत्तुङ्गा अत्युन्नतास्ते, उत्तुङ्गकूलम्, अत्यु-न्नतवेलम्, स्रुतमदसलिलाः क्षरितमदजलास्ते, प्रस्यन्दिसलिलम्, श्यामाः वर्णतः कृष्णास्ते, श्यामोपकण्ठद्रुमं श्यामः उपकण्ठस्थः समीपस्थो द्रुमो यस्य तथाभूतम्, अलिमुखराः मदगन्धलुब्धत्वेन अलयो मुखरा यत्र तथाभूतास्ते, कल्लोलमुखरं महातरङ्गेण शब्दयुक्तम्, उरुदशनैः वृहद्दन्तैः उत्सादिततटाः उत्खातकूलास्ते, स्रोतसा खातमतएव अवसीदत् तटं यस्य तथाभूतम् । सुवदनावृत्तम् 'ज्ञेया सप्ताश्वषड्भि-र्मरभनययुता भ्लौ गः सुवदने'ति लक्षणात् ।

(२) इदानीं शत्रुपुररोधनं दर्शयति । गम्भीरगर्जितरवाः गम्भीर-गर्जनवत्यः स्वमदाम्बुमिश्रम् दानवारियुक्तम् आसारवर्षं धारास-

राक्ष। कः कोऽत्र भोः।

प्रविश्य पुरुषः। आणवेदु अमच्चो (१)।

राक्ष। प्रियंवदक! ज्ञायतां सांवत्सरिकाणां द्वारि कस्ति-ष्ठति।

प्रियं। जं अमच्चो आणवेदित्ति। निष्क्रम्य क्षपणकं दृष्ट्वा पुनः प्रविश्य च। अमच्च! एसो क्खु संवच्छरिओ क्खवणओ (२)।

राक्ष। स्वगतम् अनिमित्तं सूचयित्वा। कथं प्रथममेव क्षपणक-दर्शनम्।

प्रियं। जीवसिद्धी (३)।

राक्ष। प्रकाशम्। अबीभत्सदर्शनं कारयित्वा, प्रवेशय।

प्रियं। जं अमच्चो आणवेदि (४)। इति निष्क्रान्तः॥

ततः प्रविशति क्षपणकः।

क्षप।

सासणमलिहन्ताणं पडिवज्जह, मोहवाहिवेज्जाणं।
जे पढममेत्तकडुअं, पच्छा पत्थं उवदिसन्ति॥

---

न्मातमिव सीकरम् उद्गिरन्त्यः उद्वमन्त्यः विकीर्णसलिलाः विच्छिन्न-जला मेघमालाः मेघपङ्क्तय इव मदीया मम वारणघटा गजश्रेणयः विन्ध्यमिव नगरं शत्रोरिति शेषः रोत्स्यन्ति।

(१) आज्ञापयतु अमात्यः। सं०

(२) यत् अमात्यः आज्ञापयति। अमात्य! एष खलु सांवत्सरिकः क्षपणकः सं०।

(३) जीवसिद्धिः। सं०।

(४) यद् अमात्य आज्ञापयति। सं०

उपसृत्य ॥ धम्मलाहो सावका ! भोदु (१) ।

राक्ष । भदन्त(२) ! निरूप्यतां, तावदस्माकं प्रस्थानयोग्यदिवसः ।

क्षप । नाट्येन चिन्तयित्वा । सावका ! णिरूविदे मुहुत्ते; आमज्झण्णादो णिव्वुत्तसत्तसकला सोहणा तिही, संपुण्णचन्दा पुण्णमासी, तुम्हाणं उत्तलाए दिसाए दक्खिणां दिसं पत्थिदाणं, दक्खिणदुवालिओ णक्खत्तओ । अविअ

अत्थाहिमुहे सूले, उदिदे संपुण्णमण्डले चन्दे ।
गमणं (अस्से)बुहस्स लग्गे, उदिदत्थमिदे अ केदुम्मि (२) ॥

---

(१) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम् ।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति ॥

धर्म्मलाभः उपासक ! भवतु ।! सं० अर्हतां बौद्धविशेषाणाम् ।

(२) भदन्तेति बौद्धसन्यासिनि रूढम् ।

(३) उपासक ! निरूपितो मुहूर्त्तः आ मध्याह्नात् निवृत्तसप्तशकला शोभना तिथिः सम्पूर्णचन्द्रा पौर्णमासी, युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानां, दक्षिणद्वारिकं नक्षत्रम् । अपि च

अस्ताभिमुखे सूरे, उदिते सम्पूर्णमण्डले चन्द्रे ।
गमनं (अस्मिन्) बुधस्य लग्ने, उदितास्तमिते च केतौ सं० ॥

आ मध्याह्नात् मध्याह्नकालं प्राप्य निवृत्तं सप्तशकलं विष्टिभद्राख्यं सप्तमतिथिखण्डं यस्यां 'पूर्वे पूर्णाष्टमी शुक्ले' इत्युक्तेः पौर्णमास्यां पूर्व्वार्द्ध एव विष्टिभद्राख्यं सप्तमतिथिखण्डं करणः प्रवर्त्तते तच्चाद्य मध्याह्नं प्राप्यैव निवृत्तमिति 'न गच्छेद्विष्टिभद्रायामिति' निषेधात्तदभावेन शोभनता । 'कृत्तिकाद्यास्तु पूर्व्वादौ सप्तसप्तोदिताः क्रमादि'त्युक्तेः मघादिनक्षत्रसप्तकम्

राज। भदन्त, तिथिरेव तावत् न शुध्यति (१)।

---

दक्षिणास्यम्। प्रकृते च पाटलिपुत्रनगरस्य तत्स्थानतः दक्षिणदिक्स्थितत्वात् दक्षिणां दिशं प्रस्थितानामित्युक्तम् यमभवनं गन्तुं प्रवृत्तानामित्यपि ध्वन्यते। एवं तिथिनक्षत्रे उक्त्वा यात्रासमयमाह अस्ताभिमुखे इत्यादि। सूरे सूर्ये अस्ताभिमुखे 'अपराह्णे व्रजेद्याम्यामि'त्युक्तेः तथोक्तम्। एवं समयमुक्त्वा लग्नबलमाह उदिते इति। उदिते लग्ने सम्पूर्णमण्डले 'अर्द्धेन्दुर्कसौरारा' इत्यनेन अर्द्धचन्द्रस्य पापग्रहत्वोक्तेः' तत्परीहाराय संपूर्णमण्डले इत्युक्तम्। किञ्च पौर्णमास्यां चन्द्रस्य सम्पूर्णत्वस्यैव सम्भवात्तथोक्तम्। इदानीं लग्नविशेषमाह। बुधस्य बुधस्वामिके लग्ने राशौ, कन्यालग्ने इत्यर्थात् तस्यैव दक्षिणास्यतया दक्षिणदिग्गमने प्राशस्त्यात् यद्यपि 'कुजशुक्रबुधेन्दर्कसौम्यशुक्रावनीभुवाम् जीवार्कभानुजेज्यानां क्षेत्राणि स्यु रजादय' इत्युक्तेः मिथुनराशेरपि बुधस्वामिकत्वं तथापि लग्नस्यचन्द्राश्रित तद्राशिघटकन्यगापरार्द्धार्द्रापुनर्वसुपादत्रिकाणां प्रागुक्तवचनात् दक्षिणास्यत्वाभावेन न तद्ग्रहणम्। तत्र दोषराहित्यमाह केतौ केतुग्रहे च उदितास्तमिते उदितात् लग्नात् अस्तमिते सप्तमस्थाने स्थिते सति। 'नेष्टाः शुक्रदिवाकरार्कतनयाराज्ञस्तथा भूमिजः क्षिप्रं शत्रुवशं नयन्ति पुरुषं स्थाने स्थिताः सप्तमे' इत्यनेन शुक्रादीनामेव सप्तमस्थाने अरिष्टदायकत्वोक्तेः तद्भिन्नानां शुभत्वम् अथ च क्रूरे वीरे प्रकृते राक्षसे अस्ताभिमुखे विनाशाभिमुखे, चन्द्रे, चन्द्रगुप्ते संपूर्णमण्डले सन्नद्धप्रकृतिमण्डले उदिते उत्थिते सति बुधस्य चाणक्यस्य लग्ने तदनुचरात्मात्मज्ञदत्तलग्ने केतौ मलयकेतौ गमनं तद्वृत्तिगमनं उदितेऽप्यस्तमिते आसन्नपतनत्वात् भाविनि भूतवदुपचारः अस्तमयाय इत्यर्थः। पाठान्तरे अस्मिन् भदन्ते बुधस्य लग्ने इत्यर्थः गमनमित्यध्याहारः।

(१) न शुध्यति। 'षष्ठ्यष्टमीद्वादशीषु न गच्छेत् त्रिदिनस्पृशि पूर्णिमाप्रतिपद्दर्शरिक्तावमदिनेषु चे'ति ज्योतिषनिषेधात्।

क्षप। सावका !।

एक्कगुणा होइ तिथी, चउग्गुणे होइ णक्खत्ते

चउसट्ठिगुणे लग्गे, एसे दीसदि जोइससिद्धंते।

लग्गे होइ सुलग्गे, कूलग्गहं पलिहलिज्जासु

पाविहि दीहं लाहं चन्दस्स बलेण गच्छन्ते (१)॥

राक्ष। भदन्त, अपरैः सांवत्सरिकैः सार्द्धं संवाद्यताम्।

क्षप। संवादेदु सावके ! अहं णिअं गेहं गमिस्सं (२)।

राक्ष। नखलु कुपितो भदन्तः।

क्षप। ण कुविदे तुह्माणं भदन्ते (३)।

---

(१) एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम्,
चतुःषष्टिगुणं लग्नम्, एतत् दृश्यते ज्योतिषसिद्धान्ते।
लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर आशु
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन् सं०॥

'तिथिरेकगुणा प्रोक्ता नक्षत्रं तु चतुर्गुण'मित्युपक्रम्य सहस्रगुणाधिकः सूर्यः चन्द्रो लक्षगुणाधिक, इति ज्योतिषतत्त्वोक्तेः चन्द्रबलस्यैव प्रबलत्वात् तद्बलं दर्शयितुमाह एकगुणेति। लग्नं यथाकथञ्चिदनिष्टमपि सुलग्नं शुभदम् तत्र हेतुः क्रूरग्रहं क्रूरग्रहयोगं आशु परिहर। तथाच क्रूरयोगाभावे लग्नस्य दोषराहित्यात् शुभत्वम्। तत्रानुगुणयोगमाह चन्द्रस्य बलेनेति। चन्द्रस्य बलेन विशिष्टेन बलेन गच्छन् सन् दीर्घं लाभं बहुलाभं प्राप्नुहि। अथ च क्रूरस्य राक्षसस्य ग्रहमाग्रहमासक्तिं शीघ्रं परिहर। चन्द्रस्य चन्द्रगुप्तस्य बलेन सैन्येन सह गच्छन् त्वं दीर्घलाभं विपरीतलक्षणया मृत्युरूपलाभं प्राप्नुहीति ध्वनिः।

(२) संवादयतूपासकः अहं निजं गेहं गमिष्यामि। सं०।

(३) न कुपितो युष्माकं भदन्तः। सं०।

राच। कस्तर्हि?

चप। स्वगतम्॥ भअवं कदन्ते; जेण अत्तणो पक्खं उज्झिअ परपक्खं प्पमाणीकलेसि (१)।

इति निष्क्रान्तः चपणकः॥

राच। प्रियंवदक! ज्ञायतां का वेला वर्त्तत इति।

प्रियं। जं अमच्चो आणवेदित्ति। निष्क्रम्य पुनः प्रविश्य च॥ अत्थाहिलासी भअवं सूले (२)।

राच। आसनादुत्थाय विलोक्य च। अये अस्ताभिलाषी भगवान् सहस्रदीधितिः। तथाहि

आविर्भूतानुरागः चणमुदयगिरेरुज्जिहानस्य भानोः
पत्नच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा।
एते तस्मिन्निवृत्ताः पुनरितरककुप्प्रान्तपर्य्यस्तबिम्बे
प्रायोभृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः (३)॥

इति निष्क्रान्ताः सर्व्वे।

चतुर्थोऽङ्कः।

---

(१) भगवान् कृतान्तः। येनात्मनः पक्षमुज्झित्वा परपक्षं प्रमाणीकरोषि स०। परस्य शत्रोः पक्षमस्मादृशमित्यर्थः।

(२) यत् अमात्य आज्ञापयति अस्ताभिलाषी भगवान् सूर्य्यः सं०।

(३) उदयगिरेः उज्जिहानस्य उद्गच्छतः भानोः सम्बन्धविवक्षया षष्ठी। सूर्य्य इत्यर्थात् चणं व्याप्य आविर्भूतोऽनुरागोऽनुरक्तिः तुल्यवर्णता च येषाम् तादृशाः उपवनतरवः आरामवृक्षाः पत्नच्छायैरुपलक्षिताः पुरस्तात् तस्यैवेत्यनुषङ्गः दूरं गत्वा तस्मिन् सूर्य्ये इतरककुप्प्रान्तपर्य्यस्तबिम्बे पश्चिमदिक्सीमास्थमण्डले सति आशु शीघ्रमेव न तु कालप्रतीक्षणं कृत्वेत्यर्थः निवृत्ताः। अत्रार्थान्तरं न्यस्यति। सेवमानाः भृत्याः प्रचलितविभवं गतसम्पत्तिकं स्वामिनं त्यजन्ति इति यत् स प्रायः बहुलम्।

# पञ्चमोऽङ्कः ।

ततः प्रविशति लेखमलङ्करणस्थलिकाञ्च सचुद्रामादाय सिद्धार्थकः ॥

सिद्धा । हीमाणहे २

बुद्धिजलणिज्झरेहिं सिच्चन्ती देसकालकलसेहिं ।
दंसइस्सदि अज्ज फलं गरुअं चाणक्कणीदिलदा ॥

गहीदो मए अज्ज चाणक्केण पढमलेहिदो लेहो, अमच्चरक्खसस्स मुद्दालंच्छिदो; तस्स ज्जेव मुद्दालंच्छिदा इअं आहरणपेडिआ । चलिदोह्मि पाडलिउत्तं, ता जाव गच्छह्मि । परिक्रम्यावलोक्य च । कहं क्खवणओ आअच्छदि ? ता जाव मे असउणभूदं इमस्स दंसणं, ता आदिच्चदंसणेण पडिहणामि (१) ।

---

(१) आश्चर्यम् २ । बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलसैः ।
दर्शयिष्यति अद्य फलं गुरुकं चाणक्यनीतिलता सं० ॥

गृहीतो मयार्यचाणक्येन प्रथमलेखितो लेखः अमात्यराक्षसस्य मुद्रालाञ्छितः ; तस्यैव मुद्रालाञ्छिता इयं आभरणपेटिका । चलितोऽस्मि पाटलिपुत्रं तद्यावत् गच्छामि । कथं क्षपणकः आगच्छति ? तद्यावन्मे अशकुनभूतमिमस्य दर्शनम् तस्मादादित्यदर्शनेन प्रतिहन्मि सं० । प्रथमाङ्के चाणक्येन शकटदासकायस्थेन लेखापितो लेखस्तस्य फलमद्यैव राक्षसभेदरूपं फलिष्यतीत्यतः चाणक्यनीतिप्रशंसा कृता ।

ततः प्रविशति क्षपणकः।

अलिहन्ताणं पणमामो, जे दे गंभीलदाए बुद्धीए।
लोउत्तलेहिं लोए सिद्धिं मग्गेहिं मग्गन्ति (१) ॥

सिद्धा। भदन्त ! पणमामि (२)।

क्षप। सावका ! धम्मलाहो दे होदु। सिद्धार्थकं निर्वर्ण्य। सावका ! समुद्दसन्तलणकिदव्ववसाअं विअ दे हिअअं पेक्खामि(३)।

सिद्धा। कहं भदन्तो जाणादि (४)

क्षप। सावका ! किं एत्थ जाणिदव्वं, णं एसो ज्जेव दे मग्गणाओकण्णधारे लेहे सूचेदि (५)।

सिद्धा। जाणिदं भदन्तेण देसन्तलं चलिदोह्मि; ता कधेदु भदन्तो कीदिसो अज्ज दिअसो (६)।

क्षप। विहस्य। सावका ! मुण्डं मुण्डिअ तुमं णक्खत्ताणि पुच्छसि (७) ?

---

(१) अर्हतां प्रणमामो, ये ते गम्भीरतया बुद्धेः।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्मार्गयन्ति सं० ॥

(२) भदन्त ! प्रणमामि सं०।

(३) उपासक ! धर्मलाभस्ते भवतु। उपासक ! समुद्रसन्तरणकृतव्यवसायमिव ते (दुष्करकार्य्यकरणोद्यतम्) हृदयं पश्यामि सं०।

(४) कथं भदन्तो जानाति सं०।

(५) उपासक ! किमत्र ज्ञातव्यम् ननु एष एव ते मार्गनौकर्णधारो लेखः सूचयति सं०। मार्गरूपायां नावि कर्णधार इव प्रेरकत्वात् तथाभूतः लेखः सूचयति देशान्तरगतिमिति भावः।

(६) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि ; अथ कथयतु भदन्तः कीदृशोऽद्य दिवसः सं०।

(७) उपासक ! मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि सं०।

सिद्धा। भदन्त! सम्पदं पि किं जादं ता कधेहि; जदि अत्तणो अणुऊलं भविस्सदि ता गमिस्सं; अस्सधा णिवत्तिस्सं (१)।

चप। सावकाणं सम्पदं एदस्सिं मलअकेदुकडए, अणुऊलेण, अणणुऊलेण वा, अगहिदमुद्दो ण गच्छीअदि (२)।

सिद्धा। भदन्त! कहेहि कुदो क्खु अअं (३)?

चप। सावका! णिसामेहि; पढमं दाव एत्थ मलअकेदुकडए लोअस्स अणिवालिअणिग्गमपवेसो आसी, दाणीं इदो पच्चासस्से कुसुमउरे, ण कोवि असुद्दालंच्छिदो णिक्कमिदुं पविसिदुं वा अणुमोदीअदि; ता जदि भागुराअणस्स मुद्दालंच्छिदोसि, तदो गच्छ वीसत्थो, अस्सधा णिव्वत्तिअ णिउक्कणठं चिट्ठ, मा तुमं गुम्मट्ठाणाधिवेहिं संजमिदकलचलणो राअउलं प्पवेसीअसि (४)।

---

(१) भदन्त! साम्प्रतमपि किं जातं तत्कथय; यदि अनुकूलं भवेत् तदा गमिष्यामि, अन्यथा निवर्त्तिष्ये सं०।

(२) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके, अनुकूलेन अनुकूलेन वा, अग्रहीतमुद्रो न गच्छति सं०। अनुकूलेनेत्यादेर्दिनेनेति शेषः तत्साध्यं किं न किमपीत्यर्थः।

(३) भदन्त! कथय कुतः खलु अयम्। सं०। अयं नियमः कुतः कस्मादारभ्येत्यर्थः।

(४) उपासक! निशामय; प्रथमं तावदत्र कटके लोकस्यानिवारितनिष्क्रमणप्रवेश आसीत्; इदानीम् इतः प्रत्यासन्ने कुसुमपुरे, न कोऽपि अमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमोद्यते; तत् यदि भागुरायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्तः; अ न्यथा निवृत्य निरुत्कण्ठः तिष्ठ, मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेश्यसे सं०। गुल्मस्थानं रक्षास्थानभेदः (घाटीति)प्रसिद्धम्।

सिद्धा। किं ण आणादि भदन्तो, जधा अमच्चरक्खसस्स केलिअरो अन्तिओ (सण्णिहिदो) सिद्धत्थओ अहं त्ति; ता अमुद्दालंच्छिदं पि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं (१)?

च्चप। सावका! रक्खसस्स पिसाचस्स वा केलकिरो हो हि, णत्थि उण दे अमुद्दालंच्छिदस्स णिक्कमणोबाओ (२)।

सिद्धा। भदन्त! ण कुप्प, भण मे कज्जसिद्धी होदु त्ति(३)।

च्चप। सावका! गच्छ होदु दे कज्जसिद्धी। अहंपि भागुराअणादो पाडलिउत्तं गन्तुं मुद्दं पडिच्छेमि (४)।

इति निष्क्रान्तौ, प्रवेशकः (५)।

ततः प्रविशति पुरुषेणानुगम्यमानो भागुरायणः।

भागु। आत्मगतम्। अहो विचित्रता आर्य्यचाणक्यनीतेः!

---

(१) किं न जानाति भदन्त! यथा अमात्यराक्षसस्य केलिकरः अन्तिकः (सन्निहितः) सिद्धार्थकोऽहमिति, तद् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् सं० ?

(२) उपासक! राक्षसस्य पिशाचस्य वा केलिकरो भव, नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः सं०।

(३) भदन्त! न कुप्य, भण मे कार्य्यसिद्धिर्भवतु इति सं०।

(४) उपासक! गच्छ; भवतु ते कार्य्यसिद्धिः। अहमपि भागुरायणात् मुद्रां प्रतीच्छामि सं०।

(५) 'वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजित' इत्युक्तलक्षणः। अत्र वृत्तस्य प्रथमाङ्के चाणक्यलेखापितपत्रवृत्तान्तस्य वर्त्तिष्यमाणस्य च भागुरायणसकाशात् मुद्राग्रहणादिवृत्तान्तादेः कथांशस्य सूचनात्तथात्वम्।

कुतः

मुहुर्लक्ष्योद्भेदा, मुहुरधिगमाभावगहना
मुहुः संपूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशतः ।
मुहुर्भ्रश्यद्वीजा, मुहुरपि बहुप्रापितफले
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः (१) ॥

प्रकाशम् । भद्र ! भासुरक ! न मां दूरीभवन्तमिच्छति कुमारः अतोऽस्मिन्नेवास्थानमण्डपे विन्यस्यतामासनम् ।

पुरुषः । एदं आसणं, उपविशदु अज्जो (२) ।

भागु । उपविश्य । भद्र ! भासुरक ! यः कश्चिन्मुद्रार्थी मां द्रष्टुमिच्छति, स त्वया प्रवेशयितव्यः ।

पुरु । जं अज्जो आणवेदित्ति (३) । निष्क्रान्तः ।

भागु । स्वगतम् । कष्टमेवमपि नामायमस्मासु स्नेहवान् कुमारो मलयकेतुरिति सन्धातव्यः इत्यहो दुष्करम् । अथवा

---

(१) कार्य्यवशतः कार्यविशेषमुद्दिश्य प्रयोजनवशादित्यर्थः मुहुर्लक्ष्योद्भेदा लक्ष्यस्य उद्देश्यस्य उद्भेदः सामान्यतः प्रकाशो यस्याम् अथ च मुहुरधिगमाभावेन विशेषज्ञानाभावेन गहना दुर्ज्ञेया तथाच ज्ञेयताऽज्ञेयताभ्यां विचित्रता एवमग्रेऽपि । मुहुः सम्पूर्णाङ्गी पुष्टसाधना अथ च अतिकृशा । मुहुर्भ्रश्यद्वीजा नष्टवीजा अनुद्भावितवीजा तथापि बहु यथा तथा प्रापितं फलं यया सफलेत्यर्थः इति इत्यम् अहो नयविदो नीतिज्ञस्य नीतिः नियतिः भाग्यमिव चित्राकारा । भाग्यस्य यथा फलेनैव ज्ञेयता एवं नीतेरपि फलेनैव ज्ञेयतेति भावः ।

(२) एतादासनम् उपविशतु आर्य्यः । स०

(३) यत् आर्य्यः आज्ञापयति । स०

कुले, लज्जायां च, स्वयशसि च, माने च, विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति ।
तदाज्ञां कुर्वाणो, हितमहितमित्येतदधुना
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति (१) ॥

ततः प्रविशति प्रतीहार्य्यनुगतो मलयकेतुः ।

मल । स्वगतम् । अहो, राक्षसं प्रति मे विकल्पबाहुल्यादाकुला बुद्धिर्न निश्चयमधिगच्छति । कुतः

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना
किं चाणक्यनिराकृतेन कृतिना मौर्य्येण सन्धास्यते ।
स्थैर्य्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवे
दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति (२) ॥

प्रकाशम् । विजये ! क्व भागुरायणः ?

---

(१) परतन्त्रः पराधीनो जनः कुले वंशे तदनुसारिचरिते, लज्जायां, स्वयशसि, माने च विमुखः सन् धनवति धनिनि स्वशरीरं क्षणिकधनलाभात् नश्वरवित्तलाभमुद्दिश्य विक्रीय तदाज्ञां कुर्व्वाणः अधुना हितमेतत् अहितमेतदिति विचारातिक्रान्तः सदसद्विचारशून्यः किमिति विमृशति इदं कर्त्तव्यं इदं नेति कथं विचारयति धनतृष्णया शरीरस्य विक्रयेण अस्वाधीनत्वात् न विवेचनाधिकार इति भावः ।

(२) नन्दकुलानुरागे नन्दवंशप्रीतौ दृढ़या भक्त्या नन्दान्वयालम्बिना नन्दवंशजेन चाणक्यनिराकृतेन कृतिना मौर्य्येण चन्द्रगुप्तेन सह किं संधास्यते संगंस्यते राक्षस इति शेषः अथ वा भक्तिगुणस्य स्थैर्य्यं नन्दवंशीयत्वेऽपि तस्य तद्वैरित्वात् तत्र सन्धेरनुचितत्वात् भक्तेः स्थिरत्वं विगणयन् चिन्तयन् किं सत्यसन्धोऽवितथप्रतिज्ञो भवेदित्यं मे मम चेतः आरूढ़कुलालचक्रमिव चिरं भ्राम्यति संदिग्ध इत्यर्थः ।

प्रतीहारी। कुमार ! एसो क्खु कडआदो णिक्कमिदुकामस्स मुद्दासम्पदाणाधिआरे चिट्ठदि (१)

मल। विजये ! मुहूर्त्तं निभृतपदसञ्चारी भव, यावदस्य पराङ्मुखस्यैव पाणिभ्यां नयने पिदधामि।

प्रती। जं कुमारो आणवेदि (२)।

प्रविश्य। भासुरकः। अज्ज ! एसो क्खु क्खवणओ मुद्दाणि-मित्तं अज्जं पेक्खिदुमिच्छदि (३)।

भागु। प्रवेशय।

भासु। जं अज्जो आणवेदित्ति (४)। निष्क्रान्तः।

प्रविश्य। क्षपणकः। सावकाणं धम्मविड्ढी होदु (५)

भागु। नाट्येनावलोक्य स्वगतम्। अये, राक्षसस्य मित्रं, जीव-सिद्धिः। प्रकाशम्। भदन्त ! नखलु (६) राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते ?।

क्षप। कर्णौ पिधाय। सन्तं पावं, सन्तं पावं ; सावका ! तहिं ज्जेव्व गमिस्सं जहिं रक्खसस्स पिसाचस्स वा णामं वि ण सुणी अदि (६)।

---

(१) एष खलु कटकान्निर्ष्क्रमितुकामानां मुद्रासम्प्रदानाधिकारे तिष्ठति सं०।

(२) यत् कुमारः आज्ञापयति। सं०

(३) आर्य्य! एष खलु क्षपणको मुद्रानिमित्तम् आर्य्यं प्रेक्षितुमिच्छति सं०

(४) यत् आर्य्य आज्ञापयति। सं०

(५) उपासकानां धर्म्मवृद्धिः भवतु सं०।

(६) नखलु इति निपातसमुदायः प्रश्ने।

(७) शान्तं पापं २ उपासक! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते सं०।

भागु। भदन्त! बलीयांस्ते सुहृदि प्रणयकोपः; तत् किमप राद्धं राक्षसेन भदन्तस्य?

क्षप। सावका! ण मम किंपि रक्खसेण अवलद्धं; सअंजेव्व मन्दभाओ अत्तणोखं (कम्मसु लज्जामि) अवलद्धामि (१)।

भागु। भदन्त! वर्द्धयसि मे कुतूहलम्।

मल। स्वगतम्। मम च।

भागु। श्रोतुमिच्छामि।

मल। स्वगतम्। अहमपि।

क्षप। सावका! किं एदिणा [असुणिदव्वेण] सुणिदेण (२)

भागु। भदन्त! यदि रहस्यं, तदा तिष्ठतु।

क्षप। उपासका! णहि रहस्सं (३)

भागु। तर्हि कथ्यताम्।

क्षप। सावका! णत्थि एदं। तधावि ण कधइस्सं अदिणिसंसं(४)

भागु। भदन्त! अहमपि मुद्रां न दास्यामि।

क्षप। स्वगतम्। युक्तमिदानीमर्थिने कथयितुम्। प्रकाशम्। का गदी; एसे णिवेदेमि, सुणादु सावको अत्थि दाव हगे अधसो पढमं पाडलिउत्ते निवसमाणो लक्खसस्स मित्तत्तणं

---

(१) उपसाक! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य-ात्मनो ननु अपराध्यामि पाठान्तरे आत्मनो ननु कर्मसु लज्जामि सं०

(२) उपासक! किमेतेन (अश्रोतव्येन) श्रुतेन सं०।

(३) उपासक! न हि रहस्यम् सं०।

(४) नास्तीदं, तथापि न कथयिष्यामि अतिनृशंसम् सं०।

उवगदे ; तस्सिं अवसले लक्खसेण गूढं विसकसापओअं समुप्पादिअ, घादिदे देवे पव्वदीसले (१)।

मल। सवाष्पमात्मगतम्। कथं, राक्षसेन घातितस्तातो न चाणक्येन?

भागु। भदन्त! ततस्ततः।

क्षप। तदो हगे लक्खसस्स मित्तं कदुअ, चाणक्कहदएण सणिकालं णअरादो णिव्वासिदो ; दाणींपि लक्खसेण अणेअ अकज्जकुसलेण किंपि तादिसं आलम्भीअदि, जेण हगे जीअलोआदो णि[व्वा]क्कासिआमि (२)।

भागु। भदन्त! प्रतिश्रुतराज्यार्द्ध (मयच्छता) संप्रदानमनिच्छता चाणक्यहतकेनेदमकार्य्यमनुष्ठितं, न राक्षसेनेति श्रुतमस्माभिः।

क्षप। कर्णौ पिधाय। सन्तं पावं ; सावका! चाणक्को विस

---

(१) का गतिः एष निवेदयामि शृणोतूपासकः अस्ति तावत् अहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः ; तस्मिन्नेवावसरे राक्षसेन गूढ़विषकन्याप्रयोगमुत्पाद्य, घातितो देवः पर्व्वतेश्वरः सं०।

(२) ततोऽहं राक्षसस्य मित्रं कृत्वा, चाणक्यहतकेन सनिकारं नगरान्निर्व्वासितः ; इदानीमपि राक्षसेन अनेकाकार्य्यकुशलेन किमपि तादृशमालभ्यते, येनाहं जीवलोकात् नि[ष्काश्ये] र्व्वास्ये सं०।

कणाए णामंपि ण जाणादि; तेणज्जेव्व दुट्टबुद्धिणा लक्खसेण एसा अकज्जसिद्धी किदा (१)।

भागु। भदन्त! कष्टमिदम्; इयं मुद्रा दीयते; एहि कुमारं संश्रावयाव।

मल। श्रुतं, सखे! श्रवणविदारणं वचः

सुहृत्सु खाद्रिपुमधिकृत्य भाषितम्।
पितुर्बधव्यसनमिदं हि येन, मे
चिरादपि द्विगुणमिवाद्य वर्द्धते॥(२)

क्षप। स्वगतम्। अये,श्रुतं मलयकेतुहतकेन कृतार्थोऽस्मीति निष्क्रान्तः।

मल। प्रत्यक्षवदाकाशे लक्ष्यं बद्धा। राक्षस! युक्तमिदम्।

मित्रं ममायमिति निर्वृतचित्तवृत्ति
विश्रम्भतस्त्वयि निवेशितसर्वकार्य्यः।

---

(१) शान्तं पापम्! चाणक्योविषकन्याया नामापि न जानाति; तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्य्यसिद्धिः कृता सं०।

(२) हे सखे रिपुं पर्व्वतेश्वरबधात् कृत्रिमशत्रुं राक्षमित्यर्थात् अधिकृत्य आश्रित्य भाषितं कथितं श्रवणविदारणं श्रुतमात्रेण पीडा-हेतुत्वात् अतिकठोरं सुहृदो राक्षसैव मित्रस्य तेन न तस्य मिथ्या-त्वसम्भव इति भावः मुखात् श्रुतम्। येन वाक्यश्रवणेन मे पितुर्बधरूपं कष्टं व्यसनं चिरादपि चिरकालीनमपि अद्य इदम् प्रत्यक्षायमाणत्वात् नवीकृतं सत् द्विगुणमिव वर्द्धते।

तातं निपात्य, सह बन्धुजनाक्षितोयै
रन्वर्थतोऽपि ननु राक्षस ! राक्षसोऽसि॥(७)

भागु। स्वगतम्। रक्षणीया राक्षसस्य प्राणाः इत्यार्य्यादेशः भवत्वेवं तावत्। प्रकाशम्। कुमार ! अलमावेगेन ; आसनस्थं कुमारं किञ्चिद्विज्ञापयितुमिच्छामि।

मल। उपविश्य। सखे ! किमसि वक्तुकामः।

भागु। कुमार ! इह खलु अर्थशास्त्रव्यवहारिणामर्थवशादरिमित्रोदासीनव्यवस्था न लौकिकानामिव स्वेच्छावशात्। यतस्तस्मिन् काले सर्व्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्व्वतेश्वर एव अर्थपरिपन्थी, महानरातिरासीत् ; तस्मिंश्च काले, राक्षसेनेदमनुष्ठितमिति नातिदोषमिवात्र पश्यामि। पश्यतु कुमारः ;

मित्राणि शत्रुत्वमिवानयन्ती, मित्रत्वमप्यर्थवशाच्च शत्रून्।
नीतिर्नयत्यस्मृतपूर्व्ववृत्तं जन्मान्तरं जीवतएव पुंसः॥ (८)

---

(७) अयं राक्षसः मम मित्रं सुहृद् इति विश्रम्भतो विश्वासात् त्वयि राक्षसे निवेशितसर्व्वकार्य्यः आरोपितं सर्व्वं कार्य्यं राज्यतन्त्रं येन तादृशोऽहं निर्वृतचित्तवृत्तिः संवृतमनोवृत्तिरस्मीति शेषः। बन्धुजनाक्षितोयैः मित्रजनानां नेत्रजलैः सह तातं मम पितरं पर्व्वतेश्वरं निपात्य हे राक्षस ! त्वम् अन्वर्थतः योगार्थतोऽपि राक्षसः क्रूरकर्म्माऽसि।

(८) अर्थवशात् मित्राणि सुहृदः शत्रुत्वम्; शत्रूंश्च मित्रत्वम्, आनयन्ती नीतिः जीवत एव पुंसःपुरुषान् अस्मृतपूर्व्ववृत्तं अचिन्तितपूर्व्ववृत्तान्तं जन्मान्तरं नयति।

तदत्र वस्तुन्यनुपालभ्यो राक्षसः ; आ नन्दराज्यलाभादनुग्राह्यश्च परतस्तस्य परिग्रहे, परित्यागे वा, कुमारः प्रमाणं भविष्यति।

मल। एवं भवतु, सखे ! सम्यक् दृष्टवानसि। अन्यथास्य (अमात्यस्य) वधे प्रकृतिक्षोभः स्यात्, एवञ्च सन्दिग्धो विजयः स्यादस्माकम्।

प्रविश्य। पुरुषः। जअदु जअदु कुमारो ; अअं अज्जस्स गुम्मट्ठाणाधिकिदो दीहचक्खू अज्जं विस्सवेदि ; एसो क्खु अह्मेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरिसो गहीदो ; ता पच्चक्खीकरेदु णं अज्जो त्ति (१)।

भागु। भद्र! प्रवेशय।

पुरु। जं अज्जो आणवेदि त्ति (२)। निष्क्रान्तः।

ततः प्रविशति पुरुषेणानुगम्यमानः संयतः सिद्धार्थकः।

सिद्धा। स्वगतम्।

तिप्पन्तीए गुणेसु दोसेसु परंमुहं करन्तीए।
अह्मारिसजणणीए पणमामो सामिभत्तीए (३)॥

पुरु। उपसृत्य। अज्ज! अअं सो पुरिसो (४)।

---

(१) जयतु जयतु कुमारः ; अयम् आर्यस्य गुल्मस्थानाधिकारी दीर्घचक्षुर्विज्ञापयति ; एष खलु अस्माभिः कटकात् निष्क्रामन् अगृहीतमुद्रः सलेखः पुरुषो गृहीतः ; तत् प्रत्यक्षीकरोत्वेनमार्य इति सं

(२) यत् आर्य आज्ञापयति स०

(३) तृप्यन्त्यै गुणेषु, दोषेषु पराङ्मुखं कुर्वंत्यै।
अस्माकं जनन्यै प्रणमामः स्वामिभक्त्यै सं०।

(४) अयं स पुरुषः सं०।

भागु। नाट्येनावलोक्य। भद्र!। किमयमागन्तुकः आहोस्वि-द्दिहैव कस्यचित् परिग्रहः?

सिद्धा। अज्ज! अहं क्खु अमच्चरक्खसस्स (सेवओ) पासपलि-वत्ती (१)

भागु। भद्र! तत्किमर्थमगृहीतमुद्रः कटकान्निष्क्रामसि।

सिद्धा। अज्ज! कज्जगोरवेणह्मि तुवराद्दो (२)

भागु। कीदृशं तत्कार्य्यगौरवं, यद्राजशासनमुल्लङ्घयसि।

मल। सखे! भागुरायण! लेखमुपानय।

सिद्धा। भागुरायणाय लेखमर्पयति।

भागु। सिद्धार्थकहस्ताल्लेखं गृहीत्वा मुद्रां दृष्ट्वा। कुमार! अयं लेखः, राक्षसनामाङ्कितेयं मुद्रा।

मल। मुद्रां परिपालयन्नुद्घाट्य, दर्शय।

भागु। तथा कृत्वा दर्शयति।

मल। गृहीत्वा वाचयति। स्वस्ति, यथास्थाने कुतोऽपि, कोऽपि, कमपि, पुरुषविशेषमवगमयति, अस्मद्विपक्षं निराकृत्य, दर्शिता सत्यवादिता सत्यवता। साम्प्रतमेषामपि प्रथममुपन्यस्तसन्धीना-मस्मत्सुहृदां, पूर्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनप्रोत्साह नेन सत्यसन्धः, प्रीतिमुत्पादयितुमर्हति। एते ह्येवमुपगृहीताः सन्तः, स्वाश्रयविनाशेनैवोपकारिणमाराधयिष्यन्ति। अविस्मृ-तमप्येतत् सत्यवतः स्मारयामि, एतेषां मध्ये केचिदरेः कोष-

---

(१) आर्य्य! अहं खलु अमात्यराक्षस्य (सेवकः)पार्श्वपरिवर्त्ती सं०।

(२) आर्य्य! कार्य्यगौरवेणास्मि त्वरितः सं०।

दन्तिभ्यामर्थिनः, केचिद्विषयेणेति; अस्मान्प्रति अलङ्कारत्रयञ्च; यत्सत्यवतानुप्रेषितं, तदुपगतम्, अस्माभिरपि लेखस्याशून्यार्थं किञ्चिदनुप्रेषितं, तदुपगमनीयं, वाचिकञ्चाप्ततमात् सिद्धार्थकात् श्रोतव्यमिति।(१)

मल। सखे! भागुरायण,! कीदृशो लेखार्थः।

भागु। भद्र! सिद्धार्थक! कस्यायं लेखः।

सिद्धा। अज्ज! ण आणामि (२)।

भागु। हे धूर्त्त! लेखो नीयते; न च ज्ञायते कस्येति सर्व्वं, तावत्तिष्ठतु; वाचिकं त्वत्तः केन श्रोतव्यम्?

सिद्धा। भयं नाटयन्। तुम्भेहिं (३)।

भागु। किमस्माभिः?।

सिद्धा। तुम्भेहिं गहीदो, ण आणामि का कधेति (४)।

भागु। सक्रोधम्। एष ज्ञास्यसि; भद्र! भासुरक! वहिर्नीत्वा, ताड्यतां तावत्, यावत् सर्व्वमनेन कथितं भवेत्।

पुरु। जं अज्जो आणवेदित्ति (५)। सिद्धार्थकेन सह निष्क्रान्तः।

---

(१) अयमेव लेखः चाणक्येन शकटदासेन लेखायित्वा तदङ्गुरीयस्थमुद्रयाऽङ्कयित्वा च सिद्धार्थकाय 'एवमेव करणीयमिति' कर्णे उपदिश्य पूर्वमर्पितः इति स्मर्त्तव्यम्।

(२) आर्य्य! न जानामि सं०।

(३) युष्माभिः। स०

(४) युष्माभिर्गृहीतो न जानामि का कथेतिसं०।

(५) यत् आर्य्यः आज्ञापयति इति स०।

पुनः प्रविश्य । अज्ज ! इयं तस्स ताडीअमाणस्स णाममुद्दा लंच्छिदा आहरणपेडिआ णिवड़िदा (१) ।

भागु । विलोक्य । कुमार ! इयमपि राक्षसमुद्राङ्कितैव ।

मल । अयं लेखस्याशून्यार्थो भविष्यति । इमामपि मुद्रां परिपालयन्नुद्घाट्य, दर्शय ।

भागु । तथा कृत्वा दर्शयति ।

मल । विलोक्य । अये, तदिदमाभरणं यन्मया स्वशरीरादवतार्य्य, राक्षसाय प्रेषितं ; व्यक्तं चन्द्रगुप्तस्यायं लेखः ।

भागु । कुमार ! एष निर्णीयते संशयः (२) । भद्र ! पुनरपि ताड्यताम् ।

पुरु । जं अज्जो आणवेदि त्ति । निष्क्रम्य पुनः प्रविश्य च । अज्ज एसो क्खु ताडीअमाणोविण्णवेदि कुमारस्स स्सयं ज्जेव णिवेदेमि त्ति (३) ।

मल । प्रवेशय ।

पुरु । जं कुमारो आणवेदि त्ति । निष्क्रम्य सिद्धार्थकेन सह प्रविशति ।

सिद्धा । पादयोर्निपत्य । अभएण, मे कुमारो पसादं करेदु (४)।

---

(१) आर्य्य ! इयं तस्य ताड्यमानस्य नाममुद्रालाञ्छिता आभरणपेटिका निपतिता सं० ।

(२) संशय्यते इति कर्म्मणि अच् संशयविषय इत्यर्थः ।

(३) यत् आर्य्य आज्ञापयति । आर्य्य ! एष खलु ताड्यमानो विज्ञापयति कुमारस्य स्वयमेव निवेदयामीति सं० ।

(४) अभयेन मे कुमारः प्रसादं करोतु सं० ।

मल। भद्र! भद्र! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथावस्थितम्।

सिद्धा। णिसामेदु कुमारो; अहं क्खु अमच्चरक्खसेण इमं लेहं देइअ, चन्दउत्तसकासं पेसिदोह्मि(१)।

मल। भद्र! वाचिकमिदानीं श्रोतुमिच्छामि।

सिद्धा। कुमार! संदिट्ठोह्मि अमच्चरक्खसेण, जधा, एते मम पिअवअस्सा पञ्च राआणो तुए सह पढमसमुप्पण्ण-सन्धाणा; जहा, कुलूदाहिबो चित्तवम्मा, मलअजणबदाधिबो सींहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसीआधिबदी मेहक्खो त्ति, एत्थ जेव्व पढम भणिदा तिण्णि राआणो मलअकेदुणो विसअं अहिलसन्ति [इच्छन्ति] इदरे वि दुवे कोसहत्थिबलं त्ति। ता जधा, चाणक्कं णिराकरिअ महाराएण, मम पीदी उप्पादिआ, तधा एदाणं पि पढमभणिदो अत्थो पसादइदव्वो, एत्तिको राअ-सन्देसोत्ति (२)।

---

(१) निशामयतु कुमारः; अहं खलु अमात्यराक्षसेन इमं लेखं दत्त्वा, चन्द्रगुप्तसकाशं प्रेषितोस्मि सं०

(२) कुमार, संदिष्टोऽस्मि अमात्यराक्षसेन, यथा, एते मम प्रियवयस्याः पञ्च राजानस्त्वया सह प्रथमसमुत्पन्नसन्धानाः; यथा, कुलूताधिपश्चित्रवर्म्मा, मलयजनपदाधिपतिः सिंहनादः, काश्मीरदेशाधिपः पुष्कराक्षः, सिन्धुराजः सिन्धुसेनः, पारसीकाधिपतिर्मेघाक्षइति। अत्रैव प्रथमभणितास्त्रयो राजानः मलयकेतोर्व्विषयमभिलष्यन्ति; (इच्छन्ति) इतरावपि द्वौ कोषहस्तिबलमिति। तद्यथा चाणक्यं निराकृत्य महा-

मल । स्वगतम् । कथं चित्रवर्म्मादयोऽपि मामभिद्रुह्यन्ति, अतएवैतेषां राक्षसे निरतिशया प्रीतिः । प्रकाशम् । विजये ! अमात्यराक्षसं द्रष्टुमिच्छामि ।

प्रती । जं कुमारो आणवेदि त्ति (१) । निष्क्रान्ता ।

ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः ।

राक्ष । स्वगतम् । सम्पूर्णमस्मद्बलं चन्द्रगुप्तबलैरिति, यत्, सत्यं न मे मनसः शुद्धिरस्ति । कुतः

साध्ये निश्चितमन्वयेन कथि[घटि]तं बिभ्रत् स्वपक्षे स्थितिं,
व्यावृत्तश्च विपक्षतो भवति, यत्तत् साधनं सिद्धये ।
यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धश्च य-
त्तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः ॥(२)

---

राजेन मम प्रीतिरित्यादिता, तथा एतेषामपि प्रथमभणितोऽर्थः संपादयितव्य इति एतावान् राजसन्देश इति सं० ।

(१) यत् कुमार आज्ञापयति । स०

(२) यत् साधनं सैन्यादि, सिद्धिहेतुर्धूमादिलिङ्गञ्च साध्ये निष्पाद्ये वस्तुनि, सिसाधयिषिते वह्न्यादौ च तत्साधनायेत्यर्थः निमित्तार्थे सप्तमी । निश्चितम् निश्चितसामर्थ्यं, निश्चितव्याप्तिकञ्च अन्वयेन आनुगत्येन, तत्सत्त्वनियतसत्ताकत्वरूपान्वयव्याप्त्या च घटितं युक्तं (कथितं वा) स्वपक्षे स्ववर्गे, सन्दिग्धसाध्यके पर्वतादौ च स्थितिम् आनुकूल्यं, सत्त्वं च बिभ्रत्, विपक्षात् विरुद्धपक्षात् शत्रुवर्गात्, साध्याभाववतो जलादेश्च व्यावृत्तम् निवृत्तं भवति तत्साधनं सिद्धये कार्य्यसाधनाय, साध्यानुमितिरूपसिद्धये च भवति । यत् पुनः साधनं स्वयमेव साध्यं भयादिप्रदर्शनेन वशीकार्य्यं न तु स्वत आयत्तमित्यर्थः स्वयमसिद्धत्वात् साधनान्तरेण साध्यमनुमेयञ्च । उभयोः शत्रुपक्षे आत्मपक्षे च तुल्यम् उभयपक्षानुकूल्यकारि उभयवेतन-

अथवा। तैस्तैर्विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापै(१)-रापूर्णमिति न विकल्पयितुमर्हामि। प्रकाशम्। प्रियम्वदक! उच्यन्तामस्मद्वचनात् कुमारानुयायिनोराजानः, सम्प्रति दिने-दिने प्रत्यासीदति कुसुमपुरम् अतः परिकल्पितविभागैर्भवद्भिः प्रयाणे प्रस्थातव्यम्। कथमिति

प्रस्थातव्यं पुरस्तात् खसमगधगणैर्मामनु व्यूढ़सैन्यै-
र्गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः।

---

ग्राहित्वात् समभावं, स्वपक्षे पर्व्वतादौ विपक्षे जलादौ च तुल्यम् उभयत्र स्थितत्वात् साधारणम्। पक्षे आत्मवर्गे, संदिग्धसाध्यकपर्वतादौ च विरु-द्धम् तद्वृत्तिसाध्याभावेन सहानवस्थानात् विरोधि तस्य तथाविधस्य सैन्यादेः, साधनस्य चाङ्गीकरणेन स्वीकारेण वादिनः तत्त्वनिर्णयार्थ-कथारूपवादवत इव स्वामिनः निग्रहः तिरस्करणं, पराजयश्च स्यात् पर्वते वह्निसाधनाय निश्चितसामर्थ्यं गृहीतान्वयव्याप्तिकं च धूमादिरूपं लिङ्गं स्वपक्षपर्वतादौ स्थितं न तु विरुद्धं विपक्षात् जलादितो व्यावृत्तं तेनासाधारणम् एतादृशं लिङ्गं वह्न्यादिसाधने वादिना प्रयुक्तं सिद्धये भवति। यत्तु साधनं स्वयमेव साध्यं न तु सिद्धं तेन असिद्धिदोषः उभयोः स्वपरपक्षयोः पर्व्वतजलयोस्तुल्यं यथा द्रव्यत्वादि। पक्षे पर्वतादौ विरुद्धं अवृत्ति जलत्वादि तथाच तादृशहेतोः असिद्धिसाधारणविरोधरूप दोषदुष्टत्वम्। तत्परिग्रहे वादिनोयथानिग्रहः पराजय एवं तथाभूतसै-न्यादेरङ्गीकारे स्वामिनः पराजय इत्यर्थः।

(१) विज्ञाता इङ्गितादिभिरनुमिता ये अपरागस्य चन्द्रगुप्तानन्-रागस्य हेतवः तैर्हेतुभिः प्राक् परिगृहीत उपजापो भेदो येषां तथा-विधैस्तैस्तैर्जनैरित्यर्थः।

पश्चाद्गच्छन्तु वीराः, शकनरपतयः, संहताश्चेदिहूणैः,
कौलूताद्यश्च शिष्टः पथि परिहृणुयाद्राजलोकः कुमारम्(१)॥

प्रियं। जं अमच्चो आणवेदि त्ति (२)। निष्क्रान्तः।

प्रविश्य प्रतीहारी। जअदु जअदु अमच्चो! अमच्चं इच्छदि कुमारो पेक्खिदुं (३)।

राक्ष। भद्रे! मुहूर्त्तं तिष्ठ। कः कोऽत्र भोः?

प्रविश्य पुरुषः। आणवेदु अमच्चो (४)।

राक्ष। भद्र! शकटदासं प्रति ब्रूहि, यथा परिधापिता वयमाभरणं कुमारेण, तन्न युक्तमिदानीमस्माभिरनलङ्कृतैः कुमारदर्शनमनुभवितुम्, अतो यत्तदलङ्करणत्रयं क्रीतं तन्मध्यादेकं दीयतामिति।

---

(१) मामनु मम पश्चात् व्यूढं सैन्यं यैः तैः खसमगधसैन्यैः पुरस्तात् युद्धस्येत्यर्थात् प्रस्थातव्यम्। यवनपतिसहितैः गान्धारैः मध्ययाने सैन्यमध्यभागगमने प्रयत्नः संविधेयः कार्य्यः। कुलूतानां जनपदानां राजा कौलूतः चित्रवर्मा स आद्यो यस्य सः आद्यपदेन सिंहनादपुष्कराक्षसिन्धुसेन मेघाक्षाणां ग्रहणम्। राजलोकः राजवर्गः पथि कुमारं परिहृणुयात् चित्रवर्मादीनां च राक्षसमित्रत्वेन तत्र सन्देहाभावात् कुमारानुगमनमुक्तमन्येषां प्रायशश्चन्द्रगुप्तात् विरज्य एतत्पक्षाश्रयणात् तत्र सन्देहात् तेषामन्यत्र गमनमनुशिष्टमिति द्रष्टव्यम्।

(२) यत् अमात्यः आज्ञापयति। स०

(३) जयतु जयत्वमात्यः अमात्यमिच्छति कुमारः प्रेक्षितुम् सं।

(४) आज्ञापयत्वमात्यः। स०

पुरु। जं अमच्चो आणवेदि त्ति। निष्क्रम्य पुनः प्रविश्य च। अमच्च! इदं तं अलङ्करणं (१)।

राच। नाट्येनावलोक्यात्मानमलङ्कृत्योत्थाय च। भद्र! राजकुलगामिनं मार्गमादेशय।

प्रती। एदु एदु अमच्चो (२)।

राच। स्वगतम्। अधिकारपदं नाम निर्द्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम्। कुतः

भयं तावत् सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद्भवति हृदयेष्वेव निहितम्।
अतोऽध्यारूढ़ानां पदमसुजनद्वेषजननं,
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥(३)

प्रती। परिक्रम्य। अमच्च! अअं कुमारो चिट्ठदि, ता उपसप्पदु णं अमच्चो (४)।

राच। नाट्येनावलोक्य। अये! अयं कुमारस्तिष्ठति, यएषः

---

(१) यत् अमात्य आज्ञापयति। अमात्य! इदं तदलङ्करणम् सं०।

(२) एतु एतु अमात्यः। सं०

(३) ततः तस्य प्रत्यासन्नात् निकटस्थायिजनात् हृदयेष्वेव निहितं भयमित्यनुषङ्गः अध्यारूढानाम् अतिशयप्राप्तमहिम्नां पदम् असुजनस्य खलस्य द्वेषजननं द्वेषकारि। अतः अस्मात् कारणात् सोच्छ्रायाणामुन्नतानां मतिः पतनं स्वात्मनः अधोगमननमनुकूलं नियतं यथा तथा कलयति। अत्युच्चैः पतनायेति लोकोक्तिमनुसृत्य सदा पतनभयमेवास्माकमिति भावः।

(४) अमात्य! अयं कुमारस्तिष्ठति, तदुपसर्पत्वेनममात्यः। सं०

पादाग्रे दृशमवधाय निश्चलन्तीं,
शून्यत्वादपरिगृहीततद्विशेषाम्।
वक्त्रेन्दुं वहति करेण दुर्व्वहाणां
कार्य्याणां कृतमिव गौरवेण नम्रम्॥(१)

उपसृत्य। विजयतां, विजयतां, कुमारः।

मल। आर्य्य! अभिवादये; इदमासनमास्यताम्।

राक्ष। उपविशति।

मल। अमात्य! चिरमदर्शनेनार्य्यस्य वयमुद्विग्नाः।

राक्ष। कुमार! प्रयाणे प्रतिविधानमनुतिष्ठता मया, कुमारादयमुपालम्भोऽधिगतः।

मल। अमात्य! प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि।

राक्ष। कुमार! एवमादिष्टाः कुमारस्यानुयायिनो राजानः। प्रस्थातव्यमित्यादिश्लोकं (१७१पृष्ठस्थम्) पुनः पठति।

मल। स्वगतम्। विज्ञायते, कथं यएव मद्विनाशेन चन्द्रगुप्तमाराधयितुमुद्यतास्तएव मां परिरक्षन्ति!। प्रकाशम्।

---

(१) शून्यत्वात् शून्यावलम्बनत्वात् अपरिगृहीततद्विशेषां न परिगृहीतस्तद्विशेषस्तस्य पादाग्रस्य विशेषो रूपादिर्यया तथाभूताम् अतएव निश्चलन्तीं विषयान्तरेऽसज्जमानां दृशं पादाग्रे अवधाय एकाग्रेण संस्थाप्य दुर्व्वहाणां दुःखेन वोढुं शक्यानां कार्य्याणां चिन्तेयपदार्थानां गौरवेण भारेण नम्रमिव कृतं वक्त्रेन्दुं मुखचन्द्रं करेण हस्तेन वहति तथा च करतले वक्त्रं निवेश्य पादाग्रे एकाग्रेण दृष्टिं दत्त्वा किमपि दुर्वहं कार्य्यं चिन्तयन्नेव स्थित इत्यर्थः।

आर्य्य! अस्ति कश्चिद्यः कुसुमपुरं प्रति गच्छति, ततश्चागच्छति वा।

राक्ष। कुमार! अवसितमिदानीं गतागतप्रयोजनं, ननु पञ्चषैरहोभिर्वयमेव तत्र गन्तारः।

मल। स्वगतम्। विज्ञायते। प्रकाशम्। यद्येवं, तत्किमयमार्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः?

राक्ष। विलोक्य। अये सिद्धार्थकः। भद्र! किमिदम्?

सिद्धा। सबाष्पम् लज्जां नाटयन्। पसीददु पसीददु अमच्चो। अमच्च! ताडीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं धारिदुं (१)।

राक्ष। भद्र! कीदृशं तत् रहस्यमिति, न खल्ववगच्छामि।

सिद्धा। ननु विस्सवेमि, ताडीअंतेण मए (२)। इत्यर्द्धोक्ते सभयमधोमुखस्तिष्ठति।

मल। भागुरायण! स्वामिनः, पुरस्ताद्भीतो, लज्जितश्च, नैष कथयिष्यति, अतः स्वयमेव आर्य्याय कथय।

भागु। यदाज्ञापयति कुमारः। अमात्य! एष कथयति, यथाहममात्यराक्षसेन लेखं दत्त्वा, वाचिकञ्च सन्दिश्य, चन्द्रगुप्तसकाशं प्रेषितइति।

राक्ष। भद्र! सिद्धार्थक! अपि सत्यम्?

---

(१) प्रसीदतु प्रसीदत्वमात्यः। अमात्य! ताड्यमानेन मया न पारितममात्यस्य रहस्यं धारयितुम् सं०।

(२) ननु विज्ञापयामि, ताड्यमानेन मया सं०।

सिद्धा। लज्जां नाटयन्। एदं ताडीअंतेन मए णिवेदिदं(१)।

राक्ष। कुमार! अनृतमेतत्। ताड्यमानः किं न ब्रूयात्।

मल। भागुरायण! दर्शय लेखं, वाचिकञ्चायमस्मै स्वभृत्यः कथयिष्यति।

भागु। श्रुत्वा लेखमवलोकयन्। स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि पुरुषमवगमयति। इति (२६६पृष्ठस्थम्) वाचयति।

राक्ष। कुमार! कुमार! शत्रोः प्रयोग एषः।

मल। लेखस्याशून्यार्थमार्य्येणेदमाभरणमनुप्रेषितम्, इति तत् कथं शत्रोः प्रयोगएष स्यात्। इत्याभरणं दर्शयति।

राक्ष। आभरणं निर्व्वर्ण्य। कुमार! नैतन्मयानुप्रेषितम्, एतद्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तम्।

भागु। भो अमात्य! ईदृशस्याभरणविशेषस्य, विशेषतः कुमारेण स्वगात्रादवतार्य्य, दत्तस्यायं परित्यागभूमिः?

मल। वाचिकमप्याप्ततमात् सिद्धार्थकात् श्रोतव्यमिति लिखितमार्य्येण।

राक्ष। कुतो वाचिकं? कस्य वा लेखः? अयमेवास्मदीयो न भवति।

मल। इयं तर्हि कस्य मुद्रा?

राक्ष। कुमार! कपटमुद्रामप्युत्पादयितुं शक्नुवन्ति धूर्त्ताः।

---

(१) इदं ताड्यमानेन मया निवेदितम् सं०।

भागु। कुमार! सम्यगमात्यो विज्ञापयति। भद्र! सिद्धार्थक! केनायं लिखितो लेखः।

सिद्धा। राक्षसमुखमवलोक्य तूष्णीमधोमुखस्तिष्ठति।

भागु। अलं, पुनरात्मानं ताडयित्वा कथय।

सिद्धा। अज्ज! सअढदासेण(१)।

राक्ष। कुमार! यदि शकटदासेन लिखितस्तर्हि मयैव लिखितः।

मल। विजये! शकटदासं द्रष्टुमिच्छामि।

प्रती। जं कुमारो आणवेदि त्ति (२)।

भागु। स्वगतम्। न खल्वनिश्चितार्थमार्य्यचाणक्यप्रणिधयोऽभिधास्यन्ति, आगत्य शकटदासो वा, सोऽयं लेख इति प्रत्यभिज्ञाय पूर्व्ववृत्तं(३) प्रकाशयेत्; एवं सति सन्दिहानो मलयकेतुरस्मिन् प्रयोगे स्वथादरो भवेत्। प्रकाशम्। कुमार! न कदाचिदपि शकटदासोऽमात्यराक्षसस्याग्रतो मया लिखित इति प्रतिपत्स्यते; अतोऽन्यलिखितमस्यानीयतां, यतो वर्णसंवाद एवैतत् सर्व्वं विभावयिष्यति।

मल। विजये! एवं क्रियताम्।

भागु। कुमार! मुद्रामप्यानयतु इयम्।

मल। उभयमपि क्रियताम्।

---

(१) आर्य्य! शकटदासेन सं०।

(२) यत् कुमार आज्ञापयति स०।

(३) पूर्व्ववृत्तं सिद्धार्थकेन मया लेखापितमिदं पत्रमिति प्रथमाङ्के दर्शितवृत्तान्तं प्रकाशयेत्।

प्रती। जं कुमारो आणवेदि त्ति (१)।

निष्क्रम्य पुनः प्रविश्य। कुमार, इदं क्खु तं सअडदासेण सहत्थलिहिदं पत्तअं, मुद्दा अ (२)।

मल। उभयमपि नाट्येनावलोक्य। आर्य्य, संवदन्त्यक्षराणि।

राक्ष। स्वगतम्। संवन्त्यक्षराणि ; शकटदासस्तु मम मित्रमिति च विसंवदन्त्यक्षराणि, तत् किं शकटदासेन लिखितम् ?।

स्मृतं स्यात् पुत्त्रदाराणां विस्मृताः स्वामिभक्तयः।
चलेष्वर्थेषु लुब्धेन, न यशःस्वनपायिषु ? (३)

अथवा कः सन्देहः ?

मुद्रा तस्य कराङ्गुलिप्रणयिनी, सिद्धार्थकस्तत्सुहृ
त्तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयम्।
सुव्यक्तं शकटेन भेदपटुना सन्धाय साई परै
र्भर्त्तुः स्नेहपराङ्मुखेन, कृपणं प्राणार्थिना चेष्टितम् ।(४)

---

(१) यत् कुमार आज्ञापयति सं०।

(२) कुमार! इदं खलु तत् शकटदासेन स्वहस्तलिखितं पत्रं; मुद्रा च सं०।

(३ पुत्रदाराणां सम्बन्धविवक्षया षष्ठी स्मृतं स्मरणं कृतं स्यात् शकटदासेनेति शेषः चलेषु चञ्चलेषु नश्वरेष्वित्यर्थः अर्थेषु, न पुनः अनपायिषु स्थिरतरेषु यशःसु लुब्धेन शकटदासेन स्वामिभक्तयः विस्मृताः स्युः।

(४) तस्य शकटदासस्य कराङ्गुलिप्रणयिनी तेन नान्येन तस्या लाभसम्भव इति सूचितम् अयं सिद्धार्थकस्तस्यैव सुहृत् प्रयोगाश्रयम् अभियोगसम्बद्धमिदं पत्रं शकटदासस्यैव अपरलेखेन सूचितं संवादितम् एवं हेतुसाकल्यात् परैः शत्रुभिः सार्द्धं सन्धाय भर्त्तुः स्नेहपराङ्मु

मल। आर्य्ये ! अलङ्कारत्रयं श्रीमतो यदनुप्रेषितं, तदुपगत मित्यार्य्येण यल्लिखितं, तन्मध्यादेकं किमिदम् ?। निर्व्वर्ण्यात्मगतम्। कथं तातेन धृतपूर्व्वमिदमाभरणम् ?। प्रकाशम्। आर्य्य ! कुतोऽयम लङ्कारः।

राच। वणिग्भ्यः क्रयादधिगतः।

मल। विजये ! अपि प्रत्यभिजानाति भवती भूषणमिदम्।

प्रती। निर्व्वर्ण्य सवाष्पम्। कुमार ! कहं ण पच्चभिआणिस्सं इमं क्खु, सुगिहीदणामधेएण पव्वदीसरेण धारिदपूव्वं (१)।

मल। सवाष्पम्। हा तात ?

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण ! भूषणानि।
यैः शोभितोऽसि, मुखचन्द्रकृतावभासो,
नक्षत्रवानिव शरत्समयप्रदोषः।(२)

राच। स्वगतम्। कथं पर्व्वतेश्वरधृतपूर्व्वाणीत्याह ?

---

खेन स्वामिभक्तिशून्येन भेदपटुना शकटेनैव इदं कृपणं निष्ठुरं व्यक्तम- सन्दिग्धं चेष्टितं कृतमित्यर्थः।

(१) कथं न प्रत्यभिज्ञास्यामि; इदं खलु सुगृहीतनामधेयेन देवेन पर्व्वतेश्वरेण धारितपूर्व्वम् सं०। सुगृहीतनामधेयेन प्रातःस्मरणीय नाम्ना।

(२) हे कुलभूषण ! वंशावतंस ! भूषणवल्लभस्य अलङ्कारप्रियस्य तव गात्रोचितानि चिरदेहपरिहितानि एतानि तानि पूर्व्वानुभूतानि भूषणानि यैः भूषणैः नक्षत्रवान् तारायुक्तः शरत्समयप्रदोष इव त्वं मुखचन्द्रकृतावभासः सन् शोभितोऽसि।

प्रकाशम् । व्यक्तमेतान्यपि तेन चाणक्यप्रयुक्तेन वणिग्जनेनास्मासु विक्रीतानि ।

मल । आर्य्य ! तातेन धृतपूर्व्वाणामाभरणविशेषाणां विशेषतश्चन्द्रगुप्तहस्तगतानां वणिग्भ्यः क्रयादधिगम इति, न युज्यते एतत् । अथ वा युज्यते एव ।

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः ;
कल्पिता मूल्यमेतेषाम् क्रूरेण भवता वयम् (१) ।

राक्ष । आत्मगतम् । अहो, सुश्लिष्टोऽभूदेष प्रयोगः । कुतः

लेखोऽयं न ममेति, नोत्तरमिदं, मुद्रा मदीया यतः
सौहार्द्दं शकटेन खण्डितमिति श्रद्धेयमेतत्कथम् ? ।
मौर्य्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत् ?
तस्मात्सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् (२) ।

मल । एतदार्य्यं पृच्छामि ।

राक्ष । यआर्य्यस्तं पृच्छ ; वयमिदानीमनार्य्याः संवृत्ताः ।

---

(१)) क्रूरेण कृतघ्नेन भवता अधिकं लाभमिच्छतः अधिकप्राप्त्याशयेत्यर्थः विक्रेतुश्चन्द्रगुप्तस्य तस्मै प्रतिदातुमित्यर्थः वयं मूल्यं मूल्यत्वेन कल्पिताः । तथाच एतदाभरणं दत्त्वा भवत्सकाशात् वयमेव चन्द्रगुप्तेन क्रीताः अतएवास्य विक्रयणमुचितमिति भावः ।

(२) शकटेन सौहार्द्दं मत्स्नेहः मित्रत्वं खण्डितं भग्नम् मौर्य्येण सह संधायेदं कृतमित्युत्तरमपि कथं श्रद्धेयं श्रद्धास्पदं स्यात् । तस्मात् संप्रतिपत्तिः संप्रतिपद्यते सम्मन्यतेऽनयेति संप्रतिपत्तिर्मौनं सम्मतिलक्षणत्वात् तस्यामौनत्वम् वरं नाय्यं न पुनः अपलापरूपं ग्राम्यम् असुश्लिष्टमसङ्गतमुत्तरमिति यावत् वरमित्यनुषङ्गः ।

मल।

मौर्य्योऽसौ स्वामिपुत्रः, परिचरणपरो मित्रपुत्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं, स्वमतमनुगतस्त्वन्तु मह्यं ददासि।
दास्यं सत्कारपूर्व्वं ननु सचिवपदन्तत्र ते, स्वाम्यमत्र,
स्वार्थे कस्मिन् समीहा पुनरधिकतरे त्वामनार्य्यं करोति (१)॥

राच। कुमार, एवमभियुक्तव्यवहारिणा भवतैव मे निर्णयो दत्तः। कुतः। मौर्य्योऽसौ स्वामिपुत्र, इति युष्मदस्मदोर्व्यत्ययेन पठति (२)।

मल। लेखमलङ्कारस्थगिकां च विनिर्द्दिश्य। इदमिदानीं किम्?

राच। सबाष्पम्। विधेर्विलसितमिदं, न चाणक्यस्य। कुतः;

---

(१) असौ मौर्य्यः चन्द्रगुप्तः तव स्वामिनो नन्दस्य पुत्रः असवर्णायां स्त्रियामुत्पादितस्तनयः, अहं तव मित्रस्य पर्वतेश्वरस्य पुत्रः, मित्र-पुत्रत्वेऽपि अनानुकूल्ये द्वेषभाजनतेत्याशङ्क्य विशिनष्टि परिचरणपरः सेवासक्तः। स मौर्य्यः तुभ्यमर्थस्य दाता अनुगतः त्वं तु पुनः स्वमतं स्वाभिप्रायोचितं मह्यं ददासि। ननु भोः तत्र मौर्य्ये ते तव सत्कारपूर्व-मपि सचिवपदं दास्यं पराधीनत्वात् अत्र मयि पुनस्ते स्वाम्यं स्वाधीन-त्वात् प्रभुत्वमिव। ततश्च कस्मिन् अधिकतरे स्वार्थे स्वाभीष्टे तद्विषयि-णीत्यर्थः समीहा इच्छा त्वाम् अनार्यमनार्यचरितं करोति। तथा च अधिकलाभाशयैव अकार्यप्रवृत्तिर्नृणां स्यात् किन्तु उभयपक्षयोर्मध्ये मत्पक्षाश्रयणे एव तव अधिकाभीष्टसिद्धिस्तत् कथं मामुत्सृज्य तव तत्पक्षाश्रयणमिति प्रश्नार्थः।

(२) अभियुक्तेन दोषास्पदतया शङ्कितेन मया सह व्यवहारिणा शब्दप्रयोगकारिणा अकार्य्यकरणप्रश्नकारिणेतियावत् भवतैव मम निर्णयः अभियोगशुद्ध्यर्थं निर्णायकमुत्तरं दत्तः उपदिष्टम् कथं तस्य निर्णाय-कत्वमित्याक्षेपपूर्वकं तस्यैव वाक्यस्य निर्णायकत्वं दर्शयन् तदेव पद्यं युष्म-दस्मदोर्व्यत्ययेन युष्मत्पदस्थाने अस्मत्पदम् अस्मत्पदस्थाने च युष्मत्पदं

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां,
पुत्रेभ्यः कृतवेदिनां कृतधियो येषामभिन्ना वयम्।
ते लोकस्य परीक्षकाः, क्षितिभृतः, पापेन येन क्षता
स्तस्येदं विपुलं विधेर्विलसितं, पुंसां प्रयत्नच्छिदः (१)॥

मल। सक्रोधम्। कथमद्यापि निह्नूयते विधेर्विलसितमिदं, न ममेति अनार्य्य!।

कन्यां तीव्रविषप्रयोगविषमां कृत्वा, कृतघ्न! त्वया
विस्रम्भप्रवणस्तदा मम पिता नीतः कथाशेषताम्।
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो विक्रेतुमेते वयम् (२)।

---

प्रयुज्य पठन् तदेव अभियोगस्वहृदयार्थनिर्णायकमुत्तरं ममेति कथयतीति
'मौर्योऽसौ स्वामिपुत्रः परिचरणपरो मित्रपुत्रो मम त्वम्
दाता सोऽर्थस्य मह्यं स्वमतमनुगतोऽहं तु तुभ्यं ददामि।
दास्यं सत्कारपूर्व्वं ननु सचिवपदं तत्र मे, स्वाम्यमत्र
कस्मिन्नर्थे समीहा पुनरधिकतरे मामनार्यं करोति॥

(१) परिभावधामनि परिभावस्य तिरस्कारस्य धामनि आस्पदे परिभावके इत्यर्थः भृत्यत्वे अस्माकमिति शेषः सत्यपि कृतधियः कृतप्रज्ञार्त्तारः वयं कृतवेदिनामुपकाराभिज्ञानां सतां येषां नन्दानां प्रभूणां स्नेहात् स्नेहेन पुत्रेभ्यः अभिन्ना पुत्रतुल्यस्नेहभाजनानि आस्म इति शेषः। लोकस्य परीक्षकाः सदसत्त्वविवेचकाः ते नन्दाः क्षितिभृतः येन पापेन कष्टदायकेन विधिना क्षता नाशिताः पुंसां पुरुषाणां प्रयत्नच्छिदः पुरुषकारनाशिनः तस्य विधेर्भाग्यस्य इदं विपुलं नानाविधं मयि दोषास्पदता रोपणादिकं चेष्टितं न चाणक्यस्येत्यर्थः तथाच यथा नन्दादयोऽपि भाग्येनैव हतास्तथाऽहमप्यन्तदोषभागितास्पदं कृत इति भावः।

(२) हे कृतघ्न! उपकारानभिज्ञ! त्वया कन्यां तीव्रविषस्य घोरविष-

राक्ष। स्वगतम्। अयमपरो गण्डस्योपरि विस्फोटः। (१)

प्रकाशम्। कर्णौ पिधाय। शान्तं पापं ; शान्तं पापं ; नाहं विषकन्यामारोपितवानपापोऽहं पर्वतेश्वरे।

मल। केन तर्हि व्यापादितस्तातः।

राक्ष। दैवमत्र प्रष्टव्यम्।

मल। सक्रोधम्। दैवमत्र प्रष्टव्यं ; न क्षपणको जीवसिद्धिः ?

राक्ष। स्वगतम्। कथं जीवसिद्धिरपि चाणक्यप्रणिधिः। हन्त हृदयमपि मे रिपुभिः स्वीकृतम्।

मल। सक्रोधम्। आज्ञाप्यतां शिखरसेनः सेनापतिः, ये एतेन राक्षसेन सह सौहार्दमुत्पाद्यास्मच्छरीराभिद्रोहेण चन्द्रगुप्त माराधयितुकामाः पञ्च राजानः। तद्यथा, कौलूतश्चित्रवर्म्मा मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः

---

स्यैव प्रयोगो यस्या अतएव विषमां घोरां प्राणहारकत्वात् यत्कन्या-सेवने हि घोरविषसेवनवत् झटिति प्राणहारकता तादृशीं कन्यां कृत्वा सम्पाद्य अन्विष्य कुतश्चिदानीय च तया सह मेलनं सम्पाद्येत्यर्थः। विश्रम्भप्रवणः तव विश्वासैकपरः मम पिता पर्वतेश्वरः तदा कथाशेषतां वाक्यमात्रेण शिष्टत्वं नीतः प्रापितः। मन्त्राधिकारे सचिवपदे आहित-गौरवेण मया दत्तमाहात्म्येन भवता सम्प्रति इदानीं एते वयमपि रिपोश्चन्द्रगुप्तस्य प्रणयाय प्रणयमधिगन्तुं क्रियर्थोपपदे इत्यादिना चतुर्थी। मांसवत् मांसेन तुल्यं विक्रेतुमारब्धाः इति अहो आश्चर्यम् विश्वास घातकत्वमनार्यचेष्टितमित्यर्थः।

(१) गण्डस्य गण्डरोगस्य स्वतोदुःखदायकस्य उपरि विस्फोटः दुःखान्तरदायकः इव अयम् पर्वतेश्वरवधाभियोगरूपः अपरः दोषः।

सुषेण, पारसीकाधिराजो मेघाख्य (च)इति । तत्र, तेषां मध्ये, ये त्रयः प्रधानतमाः प्रथमा मदीयां भूमिं कामयन्ते, ते गम्भीरश्वभ्रमुपनीय पांशुभिः पूर्य्यन्ताम् । इतरौ तु द्वौ हस्तिबलकामौ हस्तिनैव घात्येतामिति ।

पुरुष । जं कुमारो आणवेदि त्ति(१)निष्क्रान्तः ।

मल । सक्रोधम् । राक्षस ! राक्षस ! नाहं विश्रम्भघाती राक्षसो, मलयकेतुः खल्वहं ; तद्गच्छ समाश्रीयतां सर्व्वात्मना चन्द्रगुप्त इति ।

विष्णुगुप्तञ्च मौर्य्यञ्च सममप्यागतौ त्वया ।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः (२) ॥

भागु । कुमार ! अलं कालहरणेन शीघ्रमेव कुसुमपुरोपरोधाय प्रतिष्ठन्तामस्मद्बलानि ।

गौडीनां लोध्रधूलीपरिमलधवलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।
पांशुव्यूहा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु (३) ॥

इति सपरिजनो निर्गतो मलयकेतुः ।

---

(१) यत् कुमार आज्ञापयति स० ।

(२) दुर्नयः दुर्नीतिः त्रिवर्गं त्रयाणां धर्मार्थकामानां समुदायमिव समुदितधर्मार्थकामानित्यर्थः त्वया राक्षसेन समं सह उपागतौ युद्धार्थमागतौ चाणक्यचन्द्रगुप्तौ उन्मूलयितुं विनाशयितुमहमीशः प्रभुरस्मि ।

(३) गौडीनां गौडजनपदवासिनीनां स्त्रीणामेतेन तत्पर्यन्तं गौडदेश इति गम्यते लोध्रस्य धूलीभिः परिमलः सौगन्ध्यं सम्बन्धो वा

राक्ष। सावेगम्। हा धिक् कष्टम् तेऽपि हतास्तपस्विन-श्चित्रवर्म्मादयस्तत् कथं सुहृन्नाशाय राक्षसश्चेष्टते न रिपुविनाशाय तत्किमिदानीं करवाणि मन्दभाग्यः

किं गच्छामि तपोवनं, न तपसा शाम्येत्सवैरं मनः
किम्भर्तृननुयामि जीवति रिपौ; स्त्रीणामियं योग्यता।
किं वा खड्गसखः पतास्म्यरिबले, नेदं न युक्तं भवे
च्चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात्कृतघ्नं न चेत् (१)॥

इति निष्क्रान्ताः सर्व्वे।

पञ्चमोऽङ्कः।

---

येषामतएव धवलान् कपोलान् धूम्रयन्तः धूम्रवर्णान् कुर्वन्तः। तासामेव भ्रमरकुलरुचः कृष्णवर्णस्य कुञ्चितस्य कुटिलस्यालकस्य ललाटस्थचूर्णकेशस्य कृष्णिमानं कृष्णत्वं क्षिपन्तः अपसारयन्तः बलानामस्मत्सैन्यानां तुरगखुरक्षोदलब्धात्मलाभाः तुरगाणां घोटकानां खुरपुटेन खुराग्रेण यः क्षोदः चूर्णनं तेन लब्धः प्राप्तः आत्मलाभः सद्भावो यैः तादृशाः गजमदसलिलैः छिन्नं मूलं येषां गजदानजलैः स्वसंयोगेन शोष्यमाणाः इत्यर्थः पांशुव्यूहा धूलिसमूहाः शत्रूणामुत्तमाङ्गे पतन्तु।

(१) यतः सवैरम् अतो मनो न शाम्येत् शान्तिं नेयात्। इयं योग्यता अध्यवसायः। चन्दनदासस्य तन्नामकवणिजः मोक्षाय बन्धनमोचनाय रभसं कृतसंकल्पं चेतः कृतघ्नम् उपकारिणः अकृतोपकारित्वात् मां यदि न रुन्ध्यात् तदा इदं खड्गहस्तस्य ममारिबले गमनं किं न युक्तमपि तु युक्तमेव तेनैव स्वामिभक्तिनिष्कृशो नान्यथा तत्करणे तु यदि कदाचित् युद्धे मरणं स्यात् तदा न ततो बिभेमि किन्तु तदा चन्दनदासस्य न मोक्ष इत्येव युद्धे पतनं न युक्तमिति भावः।

# अथ षष्ठोऽङ्कः।



ततः प्रविशत्यलङ्कृतः सहर्षः सिद्धार्थकः ।

सिद्धा। जअदि जलदणीलो केसवो केसिघादी
जअदि सुजणदिट्ठीचन्दमा चन्दउत्तो ।
जअदि जअणसज्जं जा अकाऊण सेस्सं,
पड़िहदपड़िबक्खा अज्जचाणक्कणीदी ।
जाव चिरस्स कालस्स पिअवअस्सं समि(सुसि)द्धत्थअं पेक्खामि ।
परिक्रम्यावलोक्य च । अअं उण पिअवअस्सओ समि (सुसि) द्धत्थओ
दूदोज्जेव आअच्छदि ; ता जाव उवसप्पामि (१) ।

ततः प्रविशति समि(सुसि)द्धार्थकः ।

सुसिद्धा ।
सन्ताबेन्ता आबाणेसुं, मह्सवेसुं रुआवेन्ता ।
हिअअच्छिआ विअ विहवा, बिरहे मित्ताणं दुम्मणाअन्ते ॥

---

(१) जयति जलदनीलः केशवः केशिघाती
जयति सुजनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।
जयति जयनसज्जं या अकृत्वा च सैन्यं
प्रतिहतप्रतिपक्षा आर्य्यचाणक्यनीतिः ॥
यावत् चिरस्य कालस्य प्रियवयस्यं सुसि(समि)द्धार्थकं पश्यामि । अयं पुनः प्रियवयस्यः सुसिद्धार्थकः इतएवागच्छति, तद्यावदुपसर्पामि स० ।

सुदञ्च मए जधा मलअकेतुकडआदो पिअवअस्सओ सिद्ध त्थओ आअदोत्ति ; ता जाव णं अखेसामि। परिक्रम्योपसृत्य च। एसो सिद्धत्थओ अवि सुहं पिअवअस्सस्स ?(१)।

सिद्धा। विलोक्य। कधं इदोज्जेव्व पिअवअस्सओ ; सुसिद्ध-त्थओ। उपगम्य। अवि सुहं पिअवअस्सस्स ?(२)।

। उभावन्योन्यमालिङ्गतः ।

सुसिद्धा। अह वअस्स! कुदो मे सुहं, जस्स तुमं चिर-आलप्पवासपच्चागदोवि, अआणिअ वुत्तन्तं ; अमदो गदोसि त्ति (३)।

सिद्धा। पसीददु पसीददु; पिअवअस्सो अहं क्खु दिट्ठमेत्तो ज्जेव्व अज्जचाणक्केण आणत्तो, जधा, सिद्धत्थअ! गच्छ एदं वुत्तन्तं पिअं पिअदंसणस्स देअस्स चन्दसिरिणो णिवेदेहित्ति। तदो तस्स तं णिवेदिअ, एवं अणुभूदपात्थिवपसादो, अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदोह्मि (४)।

---

(१) सन्तापयन्तः आपानेषु, महोत्सवेषु रुजायन्तः।

हृदयस्थिता अपि विभवा, विरहे मित्राणां दुर्म्मनायन्ते।

श्रुतञ्च मया यथा मलयकेतुकटकात्प्रियवयस्यः सिद्धार्थक आगत इति ; तद्यावदेनमन्वेषयामि। एष सिद्धार्थकः। अपि सुखं प्रियवयस्यस्य ?। स०

(२) कथमित एव प्रियवयस्यः सुसिद्धार्थकः। अपि सुखं प्रिय-वयस्यस्य ?। स०

(३) अह वयस्य! कुतो मे सुखं, त्वं चिरकालप्रवासप्रत्यागतो-पि, अज्ञापयित्वा वृत्तान्तं, अन्यतो गतइति स०। अह इत्यव्ययं खेदे।

(४) प्रसीदतु, प्रसीदतु, प्रियवयस्यः ; अहं खलु दृष्टमात्रएव

सुसिद्धा। वअस्स ! जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं तं पिअं पिअदंसणस्स चन्दसिरिणो णिवेदिदं त्ति (१) ?

सुसिद्धा। पिअवअस्स ! तवापि किं असुणिदव्वं अत्थि ? ता णिसामेहि। अत्थि दाव, अज्जचाणक्कणीदिमोहिदमदिणा मलअकेदुहदएण, णिराकरिअ राक्खसं, हदा चित्तवम्म-प्पमुहा प्पहाणा पञ्च पत्थिवा ; तदो असमिक्खकारी एसो, दुराआरोत्ति, कदुअ उज्झिअ मलअकेदुकडअभूमिं, णिअ-भूमिकुसलदाए भअविलोलसेणतणूकदपरिवारेसुं, सकं सकं विसअं अभिप्पत्थिदेसु पत्थिवेसु भद्दभट-पुरुदत्त-हिङ्गुरात-बल-उत्त-राअसेण-भागुराअण-रोहिदक्ख-विजअवम्म-प्पमुहेहिं संजमिदो मलअकेदु। (२)

---

आर्य्यचाणक्येनाज्ञप्तः, यथा, सिद्धार्थक ! गच्छ इमं वृत्तान्तं प्रियं प्रियदर्शनस्य देवस्य चन्द्रश्रियः निवेदयेति। ततस्तस्य तन्निवेद्य, एवमनुभूतपार्थिवप्रसादः, प्रियवयस्यं प्रेक्षितुं तव गेहे चलितोऽस्मि। स०

(१) वयस्य ! यदीदं मया श्रोतव्यं भवति, तन्मामपि श्रावय किं तत्प्रियं प्रियदर्शनस्य चन्द्रश्रियः निवेदितमिति। स०

(२) प्रियवयस्य ! तवापि किं अश्रोतव्यमस्ति ; तन्निशामय, अस्ति तावत् आर्य्यचाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य-राक्षसं, हताश्चित्रवर्म्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः। ततोऽसमीक्ष्य-कारी एष, दुराचार इति कृत्वा, उज्झित्वा मलयकेतुकटकभूमिं, निजभूमिकुशलतया भयविलोलसैन्यतनूकृतपरिवारेषु, स्वकंस्वकं विषयमभिप्रस्थितेषु पार्थिवेषु, भद्रभट-पुरुदत्त-हिङ्गुरात-बलगुप्त-राजसेन-

सुसिद्धा । वअस्स ! भद्दभटप्पमुहा किल देवस्स चन्दसिरिणो अवरत्ता, मलअकेदुं समास्सिदात्ति लोए मन्तीअदि । ता किं णिमित्तं, एदं कुकविणाडअस्स विअ अस्सं मुहे अस्सं णिव्वहणे त्ति (१) ?

सिद्धा । वअस्स ! सुण दाव ; देवगदीए विअ असुणिदगदीए णमो अज्जचाणक्कणीदीए (२) ।

सुसिद्धा । वअस्स तदो तदो (३) !

सिद्धा । वअस्स ! तदोपहुदि, सारसाधनसमुदाएण इदो णिक्कमिअ, अज्जचाणक्केण पडिवस्सं अराअलोअं असेसराअबलं (४) ।

---

भागुरायण-रोहिताक्ष-विजयवर्म्म-प्रमुखैः, संयमितो मलयकेतुः । स० निजभूमौ स्वस्वाधिकारे स्वाधिकृतराज्ये वा कुशलं कुशलचिन्ता येषां तेषां भावस्तेन निजनिजविषयरक्षणाशयैवाभिप्रस्थितेष्वित्यर्थः । स०

(१) वयस्य ! भद्रभटप्रमुखाः किल देवस्य चन्द्रश्रियः अपरक्ता मलयकेतुं समाश्रिता, इति लोके मन्त्यते । तत्किंनिमित्तमेतत्, कुकविनाटकस्येव अन्यत् मुखे अन्यत् निर्वहणे इति । स० । मुखे मुखसन्धौ निर्वहणे समाप्तौ उपक्रमोपसंहारयोरेकरूपता नाटके उचिता अन्यथाकरणे कवेर्दोषो यथा, तथेदं कथमिति प्रश्नार्थः ।

(२) वयस्य ! शृणु तावत् देवगत्या इव अश्रुतगत्या नम आर्य्यचाणक्यनीत्याः स० । सम्बन्धविवक्षया षष्ठी ।

(३) वयस्य ! ततस्ततः ।

(४) वयस्य ! ततःप्रभृति, सारसाधनसमुदायेन इतो निष्क्रम्य, आर्य्यचाणक्येण प्रतिपन्नमराजलोकमशेषराजबलम् सं० ।

सुसिद्धा। वअस्स! कहिं (१)?

सिद्धा। वअस्स! जहिं एदे,

अदिसअगरुएण दाणदप्पेण दन्ती,
सजलजलदलीलामुव्वहन्तो णदन्ति;
कसपहरभएणं जाअकम्पा तुरन्ता,
गहिदजअणसज्जा, संपदन्ते तुरङ्गा (२)।

सुसिद्धा। वअस्स! सव्वं दाव चिट्ठदु; तधा सव्वलोअस्स पच्चक्खं उज्झिआहिआरो भविअ, कधं अज्जचाणक्को पुणोवि तज्जेव मन्तिपदं आरूढो (३)?

सिद्धा। वअस्स! अदिमुद्धो दाणीं सि तुमं, जो अमच्च-

---

(१) वयस्य? कुत्र सं०!

(२) यत्रैते

अतिशयगुरुणा दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो नदन्ति।
कशाप्रहारभयेन जातकम्पास्त्वरयन्तः
गृहीतजयनसज्जाः सम्पद्यन्ते तुरङ्गाः सं।

अतिगुरुणा अतिप्रवृद्धेन दानदर्पेण मदजलरूपगर्वेण सजलानां तेन नीलानामित्यर्थः जलदानां लीलां सादृश्यम् उद्वहन्तः धारयन्तो दन्तिनो हस्तिनो नदन्ति वृंहन्ति कशायास्ताड़न्याः प्रहारभयेन जातकम्पास्त्वरयन्तः स्वारोहिणः त्वरितान् कुर्वन्तः तुरङ्गाः अश्वा गृहीत जयनसज्जाः सम्पद्यन्ते सन्नद्धा भवन्ति।

(३) वयस्य! तावत् सर्व्वं तिष्ठतु, तथा सर्व्वलोकस्य प्रत्यक्षमुज्झिताधिकारो भूत्वा, कथमार्य्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः सं०!

रक्खसेण अणवगहिदपुव्वं अज्जचाणक्कबुद्धिं अवगाहिदुमिच्छसि (१)।

सुसिद्धा। वअस्स ! अध अमच्चरक्खसो दाणीं कहिं (२)?

सिद्धा। वअस्स ! सो क्खु तस्सिं पलअकोलाहले वड्ढमाणे, मलअकेदुकडआदो णिक्कमिअ, उन्दुरणामधेएण चरेण अनुसरन्तो, इमंज्जेव्व कुसुमपुरं आगदोत्ति, अज्जचाणक्कस्स णिवेदिदं (३)!

सुसिद्धा। वअस्स ! तधा णाम अमच्चरक्खसो णन्दरज्जपच्चाणअणे किदव्ववसाओ णिक्कमिअ, सम्पदं अकदत्थो पुणोवि कधं इमंज्जेव्व कुसुमउरं आअदो (४)?

सिद्धा। वअस्स ! तक्केमि, चन्दणदासस्स सिणेहेण त्ति (५)।

सुसिद्धा। वअस्स ! सच्चं चन्दणदासस्स सिणेहेण त्ति? अथ चन्दणदासस्स मोक्खं पेक्खसि (६)।

---

(१) वयस्य ! अतिमूर्ख इदानीमसि त्वं, यस्त्वममात्यराक्षसेनाप्यनवगृहीतपूर्व्वामार्य्यचाणक्यस्य बुद्धिमवगाहितुमिच्छसि स०।

(२) वयस्य ! अमात्यराक्षस इदानीं कुत्र। स०।

(३) वयस्य! स खलु अमात्यराक्षसस्तस्मिन् प्रलयकोलाहले वर्द्धमाने, मलय-केतुकटकान्निष्क्रम्य, उन्दुरनामधेयेन चरेणानुस्रियमाणः इदमेव कुसुमपुरमागत, इत्यार्य्यचाणक्यस्य निवेदितम् सं०

(४) तथा नामामात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य, साम्प्रतमकृतार्थः पुनरपि कथमिदं कुसुमपुरमागतः सं० ?

(५) वयस्य ! तर्कयामि चन्दनदासस्य स्नेहेनेति स०।

(६) वयस्य ! सत्यं चन्दनदासस्य स्नेहेनेति ?। अथ चन्दनदासस्य मोक्षं प्रेक्षसे स० !

सिद्धा। वअस्स! कुदो से अधरणस्स मोक्खो? सो क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए, दुवेहिं पि अह्मेहिं बज्झट्टाणं पवेसिअ वाबादइदव्वो (१)!

सुसिद्धा। सक्रोधम्। किं, अज्जचाणक्कस्स घातअअणो अणो णत्थि, जदो अह्मे इदिसे निसंसे कम्मे णिजुञ्जीअदि (२)।

सिद्धा। वअस्स! ण जीवलोए णिवसिदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि; ता, एहि, चंडालवेसधारिणो भविअ, चन्दणदासं बज्झट्ठाणं णेह्म (३)।

इत्युभौ निष्क्रान्तौ। प्रवेशकः।

ततः प्रविशति रज्जुहस्तः पुरुषः।

पुरु।

छग्गुणसंजोअदिढा उबाअपरिपाडीघडिदपासमुही,
चाणक्कणीतिरज्जू रिउसंजमणुज्जुआ जअदि(४)।

---

(१) कुतोऽस्याधन्यस्य मोक्षः? स खलु साम्प्रतमार्यचाणक्यस्याज्ञया, द्वाभ्यामपि आवाभ्यां बध्यस्थानं प्रवेश्य व्यापादयितव्यः सं०।

(२) वयस्य! किमार्यचाणक्यस्य घातकजनोऽन्यो नास्ति, यतोऽस्मानीदृशे नृशंसे कर्म्मणि नियुनक्ति सं०।

(३) वयस्य! न जीवलोके निवस्तुकाम आर्य्यचाणक्यस्याज्ञां प्रतिकूलयति तदेहि, चण्डालवेशधारिणो भूत्वा चन्दनदासं बध्यस्थानं नयाम सं०।

(४) षड्गुणसंयोगदृढा उपायपरिपटीघटितपाशमुखी।
चाणक्यनीतिरज्जू रिपुसंयमनर्जुका जयति सं०।

एसो सो अज्जचाणक्कस्स उन्दुरएण चरेण कधिदो पदेसो, जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो । विलोक्य । कधं एसो क्खु अमच्चरक्खसो किदावगुण्ठणो इदोज्जेव आअच्छदि ; ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अन्तरिदसरीरो पेक्खामि, कहिं आसणपरिग्गहं करेदि त्ति (१) । परिक्रम्य तथा स्थितः ।

ततः प्रविशति यथा निर्दिष्टः सशस्त्रो राक्षसः ।

राक्ष । सवाष्पम् । कष्टं भोः कष्टम् !

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।

---

षड्भिः षड्गुणितैः सन्ध्यादिभिश्च गुणैः संयोगः सम्यक् योजनं घटनं संबन्धश्च यस्याः अतएव दृढ़ा उपायानां कारणानां सामादीनां च परिपाट्या समुदायेन घटितं योजितं पाशाकारं मुखं यस्याः रिपूणां संयमने सम्यग्बन्धने ऋजुका प्रवणा अनुकूला चाणक्यनीतिरेव रज्जुः जयति सर्व्वोत्कर्षेण वर्त्तते अन्यापि रज्जुः षड्गुणरचिता दृढा उभयतः पाशाकारग्रन्थिमती संयम्यबन्धनेऽनुकूला इयं तु तदपेक्षयापि उत्कृष्टेत्यर्थः तथाच चाणक्योपदिष्टेन मया गले रज्जुदानमिषेण राक्षसः संयमनीय इति भावः ।

(१) एष स आर्य्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः यत्र मया आर्य्यचाणक्याज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः । कथमेष खल्वमात्यराक्षसः कृतावगुण्ठन इतएवागच्छति तद्यावदेभिर्जीर्णोद्यान पादपैरपवारितशरीरः प्रेक्षे कुत्रासनपरिग्रहं करोतीति सं० ।

आप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्व्वन्त्वथवोत्तमाङ्गरहितैर्नागैश्चिरं स्थीयते ॥(१)

अपि च।

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता च्छिद्रेण श्रीर्वृषलमविनीतेव वृषली।
स्थिरीभूता चास्मिन् किमह करवाम स्थिरमपि
प्रयातुं नो येषां विफलयति दैवं द्विषदिव ॥ (२)

---

(१) उच्छन्नः नष्ट आश्रयोऽवलम्बनं यस्याः अतएव कातरा श्रीः राजलक्ष्मीः कुलटा स्वैरिणीव गोत्रान्तरं वंशान्तरं गता आश्रयत्वेन प्राप्ता। यद्यपि मौर्य्यस्य नन्दजातत्वेन न तस्य गोत्रान्तरत्वम् तथापि तस्य असवर्णजातत्वात् स्वगोत्रप्रवर्त्तकत्वाभावात् नैकगोत्रता 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधि'रिति स्मरणात् असवर्णजस्य पुत्रप्रतिनिधित्वाभावात्। त्यक्तानुरागाः मुक्तनन्दानुरागाः गतानुगतिकाः गतस्य एकगमनस्य अनुगतिः गड्डुलिकाप्रवाहवदनुसरणं यासां तथाभूताः प्रजाः तामेव राज्यश्रियमनुगताः नन्दानुरागं त्यक्त्वा मौर्य्येऽनुरागं श्रीरिव चक्रुरित्यर्थः। अनवाप्तमनधिगतं पौरुषस्य विक्रमस्य फलं यैस्तादृशैः आप्तैः सुहृद्भिर्विश्वस्तमित्रैरपि कार्य्यस्य स्वस्वाधिकृतकार्य्यस्य धूः भारः उज्झिता त्यक्ता। अथवा ते आप्ता इति शेषः किं कुर्व्वन्तु। यतः उत्तमाङ्गरहितैर्मस्तकशून्यैः शीर्षतुल्यप्रधानशून्यैश्च नागैः सर्पैः सर्पतुल्यैस्तैराप्तैश्चिरं स्थीयते न तु किञ्चित् कार्य्यं क्रियते इत्यर्थः।

(२) उच्चैरभिजनं प्रशस्तवंशं भुवनपतिमशेषलोकपतिम् देवं नन्दं पतिं त्यक्त्वा छिद्रेण छलेन अविनीता नयरहिता दुःशीला वृषली कुलटेव

मया हि ;

दैवे गते दिवमतद्विधमृत्युयोग्ये
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः ॥
तस्मिन् हते तनयमस्य ; तथाप्यसिद्धि
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥ (१)

अहो विवेकशून्यता म्लेच्छस्य मलयकेतोः ! कुतः

यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिन
स्तेषां वैरिभिरक्षतः कथमसौ संधास्यते राक्षसः ।
इत्यं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं
दैवेनोपहतस्य बुद्धिरथ वा पूर्व्वं विपर्य्यस्यति ॥ (२)

---

श्रीः राजलक्ष्मीर्वलं मौर्य्यं गता । न केवलं तमनुगता अपि तु अचञ्चला सती तस्मिन्नेव मौर्य्ये स्थिरीभूता । अह विषादे अत्र किं करवाम वयमिति शेषः । दैवं भाग्यं येषां नोऽस्माकं कर्म्मणि षष्ठी । द्विषद् द्वेषं कुर्व्वदिव स्थिरमपि निश्चितोत्पत्तिकमपि कार्य्यं प्रयातुं प्रापयितुं विफलयति प्रतिकूलत्वात् कार्य्यक्षमं न करोतीति भावः ।

(१) अतद्विधमृत्युयोग्ये तद्विधस्य तादृशस्य अनार्य्यचाणक्यकर्तृकवधस्य अयोग्ये दैवे नन्दे दिवं स्वर्गं गते सति तं प्रसिद्धं शैलेश्वरमधिकृत्य अवलम्ब्य प्रयत्नः वैरनिर्यातनप्रयासः कृतः मयेति गद्यस्थमत्रान्वयि । तस्मिन् पर्व्वतेश्वरे च हते तस्य तनयम् मलयकेतुम् अधिकृत्य प्रयत्नः कृतः इति सर्वमत्रानुषज्यते । तथापि असिद्धिः वैरनिर्यातनस्यानिष्पत्तिः । एतत्समर्थनायाह हि यतः दैवं भाग्यमेव नन्दकुलस्य शत्रुः प्रतिकूलत्वात् घातक इव असौ चाणक्यः विप्रो न शत्रुरित्यनुषङ्गः ।

(२) यो राक्षसः नष्टान् प्राणैर्वियुक्तान् अपि स्वामिनः अधुना

तदिदानीमपि तावद्रातिहस्तगतो वनं गच्छेद्राक्षसो; न चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति ; अथ वा काममसत्यसन्धः इति ; वरमयशो, न पुनः शत्रुवचनपरिभूतिः । समन्तादवलोक्य सास्रम् । एतास्तावद्देवस्य पादचङ्क्रमणपरिचयपवित्रीकृतरथ्याः कुसुमपुरोपकण्ठभूमयः ।

इह हि ।

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजवितुरगं वाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्व्विनेत्थं
संप्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥ (१)

---

अपि जीवनाशं स्वजीवनक्षयपर्य्यन्तम् गोदोहमास्ते इत्यादिवत् भावस्य कर्म्मता । शुश्रूषते तत्कर्त्तव्यवैरनिर्यातनस्य सम्पादनाय प्रवर्त्तमानत्वात् तदाराधनमिव करोति इत्यर्थः । अक्षतः अहतः देहयुक्त इत्यर्थः स राक्षसः तेषां स्वामिनां वैरिभिः शत्रुभिः सह कथं संधास्यते संगंस्यते । वस्तुविवेकः वस्तुनो विवेकः सदसत्त्वरूपेणावधारणं तत्र मूढा मतिरस्य तादृशेन म्लेच्छेन इत्थं पूर्व्वोद्दर्शितहेतुकतया नालोचितं न विचारितम् अथ वा दैवेन भाग्येन उपहतस्य बुद्धिः पूर्व्वं विपर्य्यस्यति विक्षिप्यते इत्यर्थः ।

(१) अत्र देशे शार्ङ्गस्य ज्याया आकृष्टिराकर्षणं तया हेतुना मुक्तः अतएव प्रशिथिलः अदृढः कविकाप्रग्रहः वल्गाग्रहणं यस्य तादृशेन देवेन नन्देन चलेषु चञ्चलेषु लक्ष्येषु वाणमोक्षः चित्रं यथा तथा प्रजवितस्तुरगो यत्र तादृशं यथा स्यात् तथा वाणमोक्षः अकारि । अस्याम् उद्यानराजौ राजभिः सह स्थितम् इह अत्र तैश्च सह कथितमाल-

तत् क्व खलु गच्छामि मन्दभाग्यः। विलोक्य। भवतु, दृष्टमेत ज्जीर्णोद्यानमत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तमुपलप्स्ये। परिक्रम्य स्वगतम्। अहो, अलक्षितोपनिपाताः पुरुषाणां समविषमदशाविभागपरिणतयो(१) भवन्ति। कुतः ;

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः, शनै
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः।
भूयः संप्रति सोऽहमेव नगरे तत्रैव बन्ध्यश्रमो
जीर्णोद्यानकमेष तस्करइव त्रासाद्विशामि द्रुतम् ॥(२)

अथ वा। येषां प्रसादादिदमासीत्त एव न सन्ति। नाट्येन प्रविश्य विलोक्य च। अहो, जीर्णोद्यानस्य नाभिरमणीयता। अत्र हि ;

---

पितम्। तैर्नन्दनन्दपार्श्वचरराजादिभिर्विना इत्थं सम्प्रति आलोक्यमानाः कुसुमपुरस्य भूमयः भूयसा बाहुल्येन दुःखयन्ति अस्मान् दुःखितान् कुर्वन्ति दुःखशब्दात् तत् करोतीत्यर्थे णिच्।

(१) पुरुषाणां समायाः विषमायाश्च दशायाः विभागस्य परिणतयः परिपाकाः कृदभिहितो भावोद्रव्यवत् प्रकाशते इत्युक्तेः विपच्यमानाः तादृशदशाभेदाः इत्यर्थः अलक्षितोपनिपाताः न लक्षितः न तर्कितः उपनिपातः सङ्गतिः यासां तथाभूता भवन्ति।

(२) योऽहं पौरैः पुरवासिभिः नवेन्दुवत् नवेन्दुना तुल्यं अङ्गुलिभिर्निर्दिश्यमानः राज्ञां सहस्रैर्वृतश्च सन् पुरा पूर्वं राजेव पुरात् नगरात् शनैर्निरगमम्। सोऽहमेव नत्वन्य इत्यर्थः। तत्रैव नगरे नत्वन्यस्मिन्नित्यर्थः। सम्प्रति इदानीं भूयोबाहुल्येन बन्ध्यश्रमः विफलप्रयासः

विपर्य्यस्तं सौधं कुलमिव महारम्भरचनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः,
फलैर्हीना वृक्षा विगुणविधियोगादिव नया
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः । (१)

अपि चात्र ;

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ (२)

एते च तपस्विनो वृक्षाः,

---

सन् जीर्णोद्यानकमेव न पुनःराजभवनं तस्करइव त्रासात् द्रुतं विशामि । इत्येकस्मिन् मयि दशायाः विभागपरिपाकस्य विभिन्नत्वेन दृष्टत्वात् प्राक् च तस्यानवगतेः अलक्षितोपनिपात इति समर्थितम् ।

(१) आरभ्यन्ते इत्यारम्भाः कार्य्याणि चित्रादीनि च महती तेषां रचना यत्र तादृशं सौधं कुलमिव विपर्य्यस्तम् अन्यथाभूतं पतितञ्च । सुहृदोनाशेन साधोर्हृदयमिव सरः शुष्कम् ! विगुणस्य प्रतिकूलस्य विधेर्भाग्यस्य योगात् नयाइव वृक्षाः फलैः शस्यैः कार्य्यैश्च हीनाः । अविदुषो जनस्य कुनीतैः दुष्टनयैः मतिर्बुद्धिरिव भूमिः तृणैश्छन्नेत्यर्थः ।

(२) तीक्ष्णैः कठोरैर्महद्भिर्वा परशुभिः परश्वधैः क्षताङ्गानां छिन्नावयवानां रुजा रोगेण अविरतकपोतोपरुदितैः सततकपोतशब्दच्छलेन कूजन्तीनामव्यक्तं शब्दं कुर्वतीनां क्षितिरुहां वृक्षाणां-शाखानाम् परिचितानां वृक्षाणां प्ररिक्लेशेन या तद्दर्शनेन कृपा तया श्वसन्तः दीर्घनिश्वासमिव त्यजन्तः फणिनः सर्पाः स्वनिर्मोकच्छेदः कञ्चुकरूपव-

अन्तःशरीरपरिशोषमुपाश्रयन्तः,
कीटक्षतिं शुचमिवातिगुरुं वहन्तः;
छायावियोगमलिना व्यसने निमग्ना,
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः। (१)

तद्यावदस्मिन् विषमदशापरिणामसुलभे भग्नाग्रशिलातले मुहूर्त्तमुपविशामि। उपविश्याकर्ण्य च। अये, तत् किमयमाकस्मिकः शङ्खपटहविमिश्रो नान्दीनादः श्रूयते। य एषः

प्रकुर्व्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया,
बहुत्वात्प्रासादैः सपदि परिपीतोज्झितइव।
अहो नान्दीनादः पटुपटहशङ्खध्वनिमहान्,
दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहलइव। (२)

---

खलखण्डैः व्रणमिव निबध्नति वल्काकारकञ्चुकेनावृण्वन्ति। रुग्णस्य व्रणोपरिवस्त्रबन्धनं वैद्यकप्रसिद्धं तदेव चिरपरिचितवृक्षकृपया सर्पाः कुर्वन्तीवेत्युत्प्रेक्षा।

(१) वृक्षाणां शोचनीयदशां वर्णयति। अन्तःशरीरं देहमध्ये परिशोषं शुष्कतामिव उपाश्रयन्तः सेवमानाः अतिगुरुम् अतिमहतीं शुचं शोकमिव कीटक्षतिं कीटैरुपघातं वहन्तः छायावियोगेन पत्रशून्यतया छायाराहित्येन मलिना अप्रसन्नाः व्यसने दुःखे निमग्ना वृक्षाः श्मशानमुपचारात् मृत्युम् उपगन्तुमिव प्रवृत्ताः।

(२) गुरुतया अतिभारेण श्रोतॄणां श्रुतिपथं श्रवणमार्गम् असारम् तद्ग्रहणक्षमबलरहितं कुर्वन् प्रासादैः पूर्व्वं परिपीतः बहुत्वात् बाहुल्यात् पश्चात् सपदि उज्झितइव। बहुलस्य पाने उद्वमनमुचित-

विचिन्त्य । आं, ज्ञातं ; एष हि मलयकेतुसंयमनकृतं राजकुलस्य । इत्यर्द्धोक्ते । मौर्य्यकुलस्याधिकपरितोषं पिशुनयति । सबाष्पम् । कष्टं भोः कष्टम् !

आवितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः ।

अनुभावयितुं मन्ये, यत्नः संप्रति मां विना । (१)

पुरु । आसीणो अअं, ता जाव अज्जचाणक्कस्स आणत्तिं संपादेमि (२) । राक्षसमपश्यन्निव तस्याग्रतोरज्जुपाशेनात्मानमुद्बध्नाति ।

राक्ष । विलोक्य स्वगतम् । अये, कथमयमात्मानमुद्बध्नाति ! नूनमहमिव दुःखितस्तपस्वी ; भवतु, पृच्छाम्येनम् । उपसृत्य, प्रकाशम् । भद्र ! भद्र ! किमिदमनुष्ठीयते ।

पुरु । सबाष्पम् । अज्ज, जं पिअवअस्सविणासदुःखिदो अह्मारिसो मन्दभाओऽनुचिट्ठदि (३) ।

राक्ष । स्वगतम् । प्रथममेव तावन्मया ज्ञातं, नूनमहमिव आयमार्त्तस्तपस्वी ; भवतु, पृच्छाम्येनम् । प्रकाशम् । भद्र ! व्यसन

---

मिति भावः पटूनाम् अतिदृहतां पटहानां शङ्खानाञ्च ध्वनिभिर्महान् प्राप्तमहिमा नान्दीनादः हृद्ग्रार्थकशब्दभेदः दिशां दैर्घ्यं द्रष्टुं सकौतूहलइव स्वापेक्षया दिशां दैर्घ्यमस्ति नवेत्यभिसन्धाय सकौतकइव प्रसरति समन्तात् व्याप्नोति ।

(१) शत्रोः श्रियं आवितोऽस्मि । मां विना संप्रति अभिनीय व्यञ्जकहेतूनुपन्यस्य अनुभावयितुम् बोधयितुं यत्नो दर्शित इति मन्ये ।

(२) आसीनोऽयं तद्यावदार्य्यचाणक्यस्य आज्ञप्तिं सम्पादयामि । स०

(३) आर्य्य ! यत् प्रियवयस्यविनाशदुःखितः अस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति । स० । तदेवानुष्ठीयते इत्युत्तराशयः ।

सब्रह्मचारिन्! (१) यदि गुह्यं नातिभारिकं वा, ततः श्रोतुमिच्छामि किन्ते प्राणपरित्यागकारणम्?

पुरु। निरूप्य। अज्ज! ण रहस्सं ण वा अतिगुरुअं, किन्तु ण सक्कणोमि पिअवअस्सविणासदुक्खिदहिअओ, एत्तिअमेत्तम्पि मरणस्स कालहरणं कादुं (२)

राजा। निःश्वस्यात्मगतम्। कष्टमेतेषु सुहृद्व्यसनेषु परवदुदासीनाः प्रत्यादिश्यामहे (३)वयमनेन। प्रकाशम्। भद्र! यदि न रहस्यं, नातिगुरु वा, तत्पुनः श्रोतुमिच्छामि, कथ्यतां का गति(४)र्दुःखस्येति।

पुरु। अहो, णिब्बन्धो अज्जस्स, का गदी एसो णिवेदेमि। अत्थि एत्थ णअरे मणिआरसेट्ठी जिण्हुदासो णाम (५)।

---

(१) व्यसनेन सब्रह्मचारिन् तुल्यः। अतिभाराय हितम्। आतिभारिकमतिगुरुकमित्यर्थः।

(२) आर्य्य! न रहस्यं न वा अतिगुरुकं, किन्तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदयएतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुम् स०।

(३) एतेषु एवंविधेषु सुहृद्विनाशेषु परवदुदासीनाः परेण तुल्यम् उदासीनाः तत्प्रतीकाराय अकृतोद्योगत्वात्। अनेन पाशहस्तपुरुषेण वयं प्रत्यादिश्यामहे मदनुष्ठितपथेन त्वया गन्तव्यमित्युपदिश्यामहे परवदुदासीनतया न स्थेयमिति निराक्रियामहे वेत्यर्थः।

(४) गम्यतेऽस्मात् गतिःप्राप्त्यपादानं दुःखस्य प्राप्तिकारणमित्यर्थः।

(५) अहो, निर्बन्ध आर्य्यस्य, का गतिः, एष निवेदयामि अस्त्यत्र नगरे वणिक्श्रेष्ठी जिष्णुदासो नाम। स०

राक्ष । स्वगतम् । अस्ति जिष्णुदासश्चन्दनदासस्य परं मित्रम् ।

पुरु । सो मम पिअवअस्सो (१) ।

राक्ष । सहर्षमात्मगतम् । अये ! प्रियवयस्य इत्याह ; हन्त अत्यन्तसन्निकृष्टसम्बन्धः ज्ञास्यति चन्दनदासस्य वृत्तान्तम् ।

पुरु । सवाष्पम् । संपदं सो दीणजणदिण्णविहवो जलणं पविसिदुकामो णअरादो णिक्कन्तो ता अहंपि जाव तस्स पिअवअस्सस्स असुणिदव्वं ण सुणेमि, ताव अत्ताणं उब्बन्धिअ वावादेमि त्ति, इमं जिण्णुज्जाणं आअदो (२) ।

राक्ष । भद्र ! अथाग्निप्रवेशे तव सुहृदः को हेतुः ?

किमौषधिपथातिगैरुपहतो महाव्याधिभिः—(३) ?

पुरु । अज्ज ! णहि णहि (४) ।

---

(१) स मम प्रियवयस्यः । स० ।

(२) सम्प्रति स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः ; अहमपि यावत्तस्य प्रियवयस्यस्याश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति जीर्णोद्यानमागतः । स० ।

(३) औषधपथातिगैः औषधपथं औषधप्रतीकार्यतारूपं पन्थानं विषयमतिगच्छन्ति अतिगैः औषधाप्रतीकार्य्यैः महाव्याधिभिः उपहतः पीडितः किम् ? अप्रतीकार्य्यरोगाक्रान्तस्य तीव्रवेदनासहिष्णुतया मरणव्यवसायसम्भवादित्यर्थः । इति प्रथमचरणेनैकः प्रश्नः एवमुत्तरचरणत्रयेणापि प्रश्नत्रयम् ।

(४) आर्य्य ! नहि नहि । स० । रोगाक्रान्ततया तस्य न मरणव्यवसाय इत्यर्थः ।

राज। किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा?।

पुरु। अज्ज! सन्तं पावं, सन्तं पावं; एदं णत्थि; चन्दउत्तस्स जणवदेसु अणिसंसा पडिवत्ति(१)।

राज। अलभ्यमनुरक्तवान् किमयमन्यनारीजनम्—?

पुरु। कर्णौ पिधाय। अज्ज! सन्तं पावं, २ अभूमि क्खु, एस विणअणिधाणस्स सेट्ठिजणस्स, विसेसदो जिसुदासस्स(२)।

राज। किमस्य भवतो यथा सुहृदएव नाशो विषम्(३)?

पुरु। अज्ज! अध इं (४)?

राज। सावेगमात्मगतम्। चन्दनदासोऽस्य सुहृदः प्रियसुहृत्तमस्तस्य प्रियसुहृद्विनाशएवाग्निप्रवेशहेतुरिति, यत् समाकुलितएवास्मि सुहृत्स्नेहपक्षपातिना हृदयेन। प्रकाशम्। भद्र! तस्यापि तव सुहृदः सुचरितं विस्तरेण श्रोतुमिच्छामि।

---

(१) आर्य! शान्तं पापं, शान्तं पापं; इदं नास्ति चन्द्रगुप्तस्य जनपदेषु अनृशंसा प्रतिपत्तिः। स०। इदं राजकर्तृक क्रोधेन निरासात् मरणव्यवसायः नास्ति। यतः जनपदेषु चन्द्रगुप्तस्य प्रतिपत्तिः व्यवहारः अनृशंसा अघातुका लोकहिंसाजनकत्वाभावात् तद्व्यवहारस्य।

(२) शान्तं पापं, शान्तं पापं, अभूमिः खल्वेष विनयनिधानस्य वणिग्जनस्य, विशेषतो जिष्णुदासस्य। स०। विनयनिधानस्य वणिग्जनस्य एष परनारीजनः अभूमिः अनुरागाविषयः खलु।

(३) भवतस्तव यथा सुहृदो जिष्णुदासस्य नाशो विषं मरणहेतुत्वात् विषमिव तथा अस्यापि जिष्णुदासस्य सुहृदन्तरस्य नाशो विषमिव किम्? मरणहेतुः।

(४) आर्य! अथ किम्। स०। सुहृन्नाशएव मरणहेतुरित्यर्थः।

पुरु । अज्ज ! अदो अवरं ण सक्कुणोमि, मन्दभाओ; मरणस्स विग्घमुप्पादेदुं (१) ।

राक्ष । अवणीयां कथां कथयतु भद्रमुखः ।

पुरु । का गदी ; एसो क्खु णिवेदेमि, णिसामेदु अज्जो(२) ।

राक्ष । भद्र ! दत्तावधानोऽस्मि ।

पुरु । अत्थि, जाणादि अज्जो, एत्थ णअरे मणिआरसेट्ठी चन्दणदासो णाम (३) ।

राक्ष । सविषादमात्मगतम् । एतत्तदपावृतमस्मद्विनाशदीक्षा-प्रकाशद्वारं(४) दैवेन । हृदय ! स्थिरीभव, किमपि ते कष्टतर-माकर्णनीयम् । प्रकाशम् । भद्र ! श्रूयते मित्रवत्सलः स साधुः किं तस्य ?

पुरु । सो अ तस्स जिण्हुदासस्स पिअवअस्सो होदि(५) ।

राक्ष । स्वगतम् । अयमत्यन्तः शोकवज्रपातो हृदयस्य । प्रकाशम् । ततस्ततः ।

---

(१) आर्य्य ! अतोऽपरं न शक्नोमि, मन्दभाग्यो, मरणस्य विघ्नमुत्पादयितुम् । स० ।

(२) का गतिः ; एष खलु निवेदयामि, निशामयतु आर्य्यः । स०

(३) अस्ति जानात्यार्य्य, इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम । स० ।

(४) अस्मद्विनाशस्य दीक्षाया उपदेशस्य प्रकाशद्वारं वहिर्द्वारं दैवेन भाग्येन एतदपावृतम् उद्घाटितम् ।

(५) स च तस्य जिष्णुदासस्य प्रियवयस्यो भवति । स० ।

पुरु। तदो जिस्सुदासेण पिअवअस्सस्स सिणेहसरिसं अज्ज विसत्तो चन्दउत्तो (१)।

राज। कथय किमिति?

पुरु। देव! अत्थि मे गेहे कुटुम्बभरणपज्जत्तो अत्थो तस्स विणिमयेण मुञ्चदु मे पिअवअस्सो चन्दणदासो त्ति(२)।

राज। स्वगतम्। साधु जिष्णुदास! साधु; अहो दर्शितो मित्रस्नेहः। कुतः।

पितॄन् पुत्राः पुत्रान् परवदभिसन्धाय पितरो,
यदर्थं सौहार्दं, सुहृदि च समुज्झन्ति सुहृदः।
प्रियं सद्यस्त्यक्तुं व्यसनिनि वयस्ये व्यवसितः
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः। (३)

---

(१) ततो जिष्णुदासेन प्रियवयस्यस्य स्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः। स०

(२) अस्ति मे गेहे कुटुम्बभरणपर्य्याप्तोऽर्थस्तस्य, विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति। स०। कुटुम्बभरणपर्य्याप्तोनाधिकः तेन तस्य अत्यन्यत्वेऽपि सुहृन्मोचनाय दातव्यताकथनात् अतीवात्मनः सुहृद्विपदुद्धारैकप्रवणता सूचिता।

(३) यस्मै अर्थाय धनाय इदं यदर्थं धननिमित्तं परवत् परेण तुल्यमभिसन्धाय, अभिमत्य पुत्राः पितॄन्, पितरः पुत्रान्, सुहृदश्च सुहृदि सौहार्दं स्नेहं समुज्झन्ति त्यजन्ति। वयस्ये प्रियबन्धौ व्यसनिनि सति प्रियमपि यमर्थमित्यग्रेण सम्बन्धः। सद्यः तत्क्षणात् त्यक्तुं त्वं व्यवसितः उद्युक्तः। वणिजस्तव वणिक्त्वेऽपि वणिग्जनस्यार्थत्यागस्यातिदुष्करत्वादिति भावः सोऽर्थः कृतार्थः कृतकार्य्यः।

प्रकाशम्। भद्र! ततस्तथाभिहितेन सता किं प्रतिपन्नं मौर्य्येण?

पुरु। अज्ज! तदो एवं भणिदेण चन्दउत्तेण पडिभणिदो जिसुदासो, जिसुदास! ण मए अत्थस्स कालणेण सेट्ठी संजमितो चन्दणदासो, किन्तु पच्छादिदो अणेण अमच्चरक्खसस्स घरअणो, बहुसो जाचिदेणावि ण समप्पिदो त्ति; ता जइ अमच्चरक्खसस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो; अणधा, प्पाणहरो से दण्डो अह्मकोपं पड़िमाणेदु त्ति। अणोवि जणो एवं ण करइस्सदि त्ति भणिअ, बज्झट्ठाणं आणीदो तदो, जाव पिअवअस्सस्स चन्दणदासस्स असुणिदव्वं ण सुणेमि, तावज्जेव्व अत्ताणअं वाबादेमि त्ति, जलणे पविसिदुकामो सेट्ठी जिणुदासो णअरादो णिग्गदो। अहंपि जाव पिअवअस्सस्स जिसुदासस्स असुणिदव्वं ण सुणेमि, ताव उब्बन्धिअ अत्ताणअं वाबादेमि त्ति, इमं जिसुज्जाणंआगदोह्मि (१)

---

(१) आर्य्य, तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी जिष्णुदासः, जिष्णुदास! न मयार्थस्य कारणेन श्रेष्ठी चन्दनदासः संयमितः, किन्तु प्रच्छादितोऽनेन अमात्यराक्षसस्य गृहजनो बहुशो याचितेनापि न समर्पित इति; तद्यदि अमात्यराक्षसस्य गृहजनं समर्पयति, तदस्ति तस्य मोक्षः; अन्यथा, प्राणहरस्तस्य दण्डोऽस्मत्कोपं प्रतिमानयतु (परिशमयतु) इति। अन्योऽपि जनो यथा एवं न करिष्यतीति भणित्वा, बध्यस्थानमानीतः। ततो यावदस्य चन्दनदासस्याश्रोतव्यं न शृणोमि, तावदात्मानं व्यापादयामीति, ज्वलने प्रवेष्टुकामः श्रेष्ठी जिष्णुदासो

राच । न खलु व्यापादितश्चन्दनदासः ॥

पुरु । अज्ज ! ण दाव वावादोअदि ; सो क्खु संपदं पुणो पुणो अमच्चरक्खसस्स घरजणं जाचीअदि, ण सो मित्तवत्सलदाए जाचीअन्तोऽपि तं समप्पेदि ; ता एदिणा कालणेण होदि से मरणस्स कालहलणं (१)

राच । सहर्षमात्मगतम् । साधु वयस्य ! चन्दनदास ! साधु, साधु ;

शिवेरिव समुद्भूतं शरणागतरक्षया,
विचीयते त्वया साधो ! यशोऽपि सुहृदा विना । (२)

प्रकाशम् । भद्र ! भद्र ! गच्छ शीघ्रमिदानीं जिष्णुदासं ज्वलनप्रवेशान्निवारय । अहमपि चन्दनदासं मरणान्मोचयामि ।

पुरु । अध, केण उण उवाएण अज्जो चन्दणदासं मरणादो मोचेदि (३)

---

नगरान्निर्गतः । अहमपि यावत् प्रियवयस्याश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति, इदं जीर्णोद्यानमागतोऽस्मि । स०

(१) आर्य्य ! न तावत् व्यापाद्यते, स खलु साम्प्रतं पुनः पुनः अमात्यराक्षसस्य गृहजनो याच्यते, न स मित्रवत्सलतया याच्यमानोऽपि तं समर्पयति ; तदेतेन कारणेन भवति तस्य मरणस्य कालहरणम् । स०

(२) हे साधो सत्स्वभाव ! सुहृदा मया विनापि शरणागतस्य शरणप्राप्तस्य मत्परिजनस्य रक्षया आत्मविनाशेनापि पालनेन शिवेरिव समुद्भूतं समुत्थितं यशस्त्वया विचीयते उपचीयते ।

(३) अथ केन पुनरुपायेन आर्य्यः चन्दनदासं मरणान्मोचयति । स०

राक्ष। खड्गमाकृष्य। नन्वनेन व्यवसायमहासुहृदा निस्त्रिंशेन।

ननु, पश्य;

निस्त्रिंशोऽयं विगतजलदव्योमसंकाशमूर्त्ति
र्युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण।
सत्त्वोत्कर्षात्समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद्विवशमथ वा साहसे मां नियुङ्क्ते।(१)

पुरु। अज्ज! एवं सेट्ठिचन्दणदासजीविदं होदि त्ति, सुणिदं; विसमदसाविभागपरिणामपडिदो, ण सक्कोमि णिच्चिदपदं भणिदुं। विलोक्य पादयोर्निपत्य। अध, सुगिहीदणामधेया अमच्चरक्खसपादा तुह्मे त्ति, ता करेहि मे पसादं संदेहणिसएण (२)

---

(१) विगतो अपगतो जलदो यस्मात् जलधरमुक्तस्य व्योम्नः तुल्या कृष्णा मूर्त्तिरस्य निभादिवदस्याखपदविग्रहः। असौ हि कृष्णिमत्ववर्णनं कविसम्प्रदायप्रसिद्धमिति तथोक्तम्। युद्धश्रद्धया युद्धादरेण पुलकितः जातरोमाञ्चः हृष्टइवेत्यर्थः करेण मम हस्तेन जातसख्यः अतिचिरपरिचितत्वात् जातस्नेहः तेन धृत इत्यर्थः। परैः शत्रुभिः मे मम सत्त्वोत्कर्षात् बलातिशयात् समरनिकषे समरः निकषइव परीक्षाहेतुत्वात् तस्मिन् दृष्टः सारो बलं यस्य तादृशः अयं निस्त्रिंशः निर्गतस्त्रिंशदङ्गुलिभ्यः दीर्घः खड्गः मित्रस्य चन्दनदासस्य स्नेहात् विवशमथ वा व्याकुलमपि मां साहसे बलपूर्वककर्म्मणि नियुङ्क्ते साहसकर्म्मकरणाय प्रेरयति।

(२) आर्य्य! एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुतं, विषमदशाविभागपरिणामपतितो, न शक्नोमि निश्चितपदं भणितुम्। अथ सुगृहीतनामधेया आर्य्यराक्षसपादा यूयमिति, तत् कुरु मे प्रसादं संशयनिर्णयेन। स०।

राच । भद्र ! सोऽहमनुभूतभर्तृवंशविनाशः सुहृद्विनाशहेतुरनार्यो गृहीतनामा यथार्थो राक्षसः ।

पुरु । सहर्षं पुनः पादयोर्निपत्य । पसीदध, पसीदध, हीमाणहे दिट्ठिआ कदत्थोह्मि (१) ।

राच । भद्र ! उत्तिष्ठोत्तिष्ठ ; कृतमिदानीं कालहरणेन ; निवेद्यतां जिष्णुदासाय, यथैष राक्षसश्चन्दनदासं मरणान्मोचयति इति निस्त्रिंशोऽयमित्यादि पठन्नाकृष्टखड्गः परिक्रामति ।

पुरु । पादयोर्निपत्य । पसीदन्तु, पसीदन्तु, अमच्चरक्खसपादाः अत्थि दाव एत्थ णअरे पढमं चन्दउत्तहदएण अज्जसअडदासस्स बधो आणत्तो ; सो अ केणावि बज्झट्ठाणादो अबहरिअ, देसन्तरं अबवाहिदो तदो ; चन्दउत्तहदएण, कीस प्पमादो कदोत्ति, अज्जसअडदासबधवञ्चणाए समुज्जलिदो रोसग्गी, घादअजणबधजलेण णिव्वाबिदो तदोपहुदि, घातआ जं कं पि गहिदसत्थं अपुव्वं पुरुसं अग्गदो पच्चादो वा पेक्खन्ति, तदो अडुवखेज्जेव्व अत्तणो जीविदं परिरक्खन्तो, अप्पमत्ता, एदे अवाराबज्झट्ठाणं बज्झं वाबादेन्ति । ता एवं गहिदसत्तेहिं अमच्चपादेहिं तहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स बहो तुवराइदो होदि (२) निष्क्रान्तः ।

---

(१) प्रसीदथ, प्रसीदथ ; आश्चर्यं दिष्ट्या कृतार्थोऽस्मि । स० ।

(२) प्रसीदन्तु, प्रसीदन्तु, अमात्यराक्षसपादाः । अस्ति तावदत्र नगरे प्रथमं चन्द्रगुप्तहतकेनार्यशकटदासस्य बध आज्ञप्तः ; स च केनापि बध्यस्थानादपहृत्य देशान्तरमपवाहितः ; ततश्चन्द्रगुप्तहतकेन कस्मात् प्रमादः कृतः इति आर्यशकटदासबधवञ्चनया समुज्ज्वलितो

राक्ष। स्वगतम्। अहो दुर्बोधश्चाणक्यबटोर्नीतिमार्गः। कुतः ;

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं,
किमिति निहतस्तेन क्रोधाद्बधाधिकृतो जनः ?।
अथ स कृतकं तादृग्लेखं कथं नु विभावये
दिति मम मतिस्तर्कारूढा न पश्यति निश्चयम् ॥ (१)

विचिन्त्य। तस्मात्,

नायं निस्त्रिंशकालः, प्रथममिह कृते घातकानां विघाते,
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्य्यमत्र।

---

रोषाग्निर्घातकजनबधजलेन निर्व्वापितः, ततः प्रभृति, घातका यं कञ्चित् गृहीतशस्त्रं पुरुषमग्रतः पश्चाद्वा प्रेक्षन्ते, तदा अर्द्धपथे एवात्मनो जीवितं परिरक्षन्तो, ऽप्रमत्ता, एते स्ववात्तबध्यस्थानं बध्यं व्यापादयन्ति। तस्मादेवं गृहीतशस्त्रैरमात्यपादैः तत्र गच्छद्भिः, श्रेष्ठिचन्दनदासस्य बधस्त्वरायितो भवति। स०।

(१) यदि शत्रोश्चाणक्यस्य मतेन सम्मतेन गूढ़चरेण सिद्धार्थकेन स शकटः बध्यस्थानात् अपवाह्येति शेषः ममान्तिकं नीतः तदा क्रोधात् तदपसारणविषयप्रमादकृतात् घातकविषय कोपात् बधाधिकृतो घातको जनस्तेन चाणक्येन तत्प्रहितेन चन्द्रगुप्तेन वा किमिति निहतः तस्य गूढ़चरेणैव स्वेष्टसम्पादनात् घातकजनस्य न तदनिष्टापादनमिति तस्य बधस्यानुचितत्वात् तथाचरणं किमिति किंहेतुकंतया च सिद्धार्थको न तस्य गूढ़चर इति प्रथमसंशयः। अथ पक्षान्तरे तस्य चाणक्यस्या प्रणिधित्वे स सिद्धार्थकः कृतकं कूटं मिथ्याभूतं तादृशं लेखं पूर्व्वदर्शित-प्रकारेणैव कथं नु वितर्कं विभायेत्, वितर्कयामि तेन नोद्भावनं कार्य्य मित्यर्थः तथाच तस्य तच्चरत्वे एव तथाचरणं नान्यथेत्यर्थः इत्थं तर्कारूढा संशयापनोदनार्थं तर्कमनुसरन्ती मम मतिः निश्चयं न पश्यति नावलम्बते।

औदासीन्यं न युक्तं, प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं, ज्ञातमस्मिन् स्वतनुमहमिमां निष्क्रयं कल्पयामि।(१)

इति निष्क्रान्ताः सर्व्वे

इति षष्ठोऽङ्कः।

---

(१) इह एतद्विषये अयं निस्त्रिंशस्य तद्व्यापारस्य न कालः। प्रथमं मत्खड्गव्यापारात् पूर्वं घातकानां घातकैः कर्त्तरि सम्बन्धविवक्षया षष्ठी। विघाते चन्दनदासस्येति शेषः घातने कृते सति तेन किं कार्य्यमित्यपकर्षः। अथ नीतिरेवावलम्बनीयेत्याशङ्क्य नीतिरपि कालान्तरे फलं प्रकटयति नेदानीं तथा च तया नीत्यापि किमत्र कार्य्यम् एवं चेत् तदौसीन्यमेव अवलम्ब्यतामित्याशङ्क्य नेत्याह प्रियसुहृदि चन्दनदासे मत्कृते मन्निमित्तं अतिघोरां व्यापत्तिं विपत्तिं मरणं गते सति औदासीन्यमपि न युक्तम्। एवं संशय्य कर्त्तव्यनिश्चयमभिनयति ज्ञातमिति कर्त्तव्यव्यापारो निश्चित इत्यर्थः। किं तदाह इमां स्वतनुं निष्क्रयं चन्दनदासस्य मोचनप्रतिमूल्यभूतां कल्पयामीति निश्चितमित्यर्थः।

# अथ सप्तमोऽङ्कः।

ततः प्रविशति चण्डालः।

चण्डा। ओसलध अज्जा! ओसलध, अवेध माणहे! अवेध। जइ महह लक्खिदु' णिअप्पाणे, विहवे, कुले, कलत्ते च। पलिहलध विसमिव लाआपत्थ' पअत्तेण॥

अविअ;

होदि पुलिसस्स वाही, मलणं वा, सेविदे अवत्थम्मि।
लाआपत्थे उण सेविदे सअलं उलं मलदि॥

ता, जइ ण पत्तिआअध, तदपेक्खध एदं लाआवत्थकालिणं सेट्ठिचन्दणदासं वज्झट्ठाणं आणीआमाणं सपुत्तकलत्तं। आकाशे। अज्जा! किंभणाध? अत्थि किं चन्दणदासस्स मोक्खोबाओ त्ति? कुदो से अधसस्स मोक्खोबाओ त्ति? एदं उण अत्थि से जइ अमच्चरक्खसस्स घरअणं समप्पेदि। पुनराकाशे। किं भणाध? एसे सलणागदवच्छले अत्तणोजोविदस्स कालणेण ईदिसं अकज्जं कलिस्सदि त्ति? अज्जा! जइ एवं तेण हि अवधालेध से असुभगदिं एत्तिके दाणीं तुह्माणं पडीआले (१)।

---

(१) अपसरत हे आर्याः! अपसरत, अपेत, हे मान्याः! अपेत यदि मन्यध्वं रक्षितु' निजप्राणान्, विभवान्, कुलानि, कलत्राणि च। परिहरत तस्मात् विषमिव राजापथ्यं प्रयत्नेन।

अपिच;

भवति पुरुषस्य व्याधिर्मरणं सेविते अपथ्ये;

ततः प्रविशति द्वितीयचण्डालानुगतो बध्यवेशधारी, शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्त्रेण चानुगम्यमानश्चन्दनदासः ।

कुटु। । हद्धी, हद्धी ; अह्मारिसाणं वि कधं चारित्तभङ्ग-भीरूणं, चोरजणाणं विअ, मरणं पत्तं त्ति । णमो णमो कद-न्तस्स । अह वा णिसंसाणं, उदासीणेसुं, इदरेसुं वा, विसेसो अत्थि ? (१) । तथाहि ।

मोत्तूण आमिसाइं मरणभएण तिणेहिं जीवन्ति ।

वाहाणं मुद्धहरिणे हन्तुं को णाम णिब्बन्धो (२) ।

---

राजापथ्ये पुनः सेविते सकलं कुलं म्रियते ।

तद्यदि न प्रत्येथ, तदा प्रेक्षध्वम् एनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं बध्यस्थानमानीयमानं सपुत्त्रकलत्रम् । आर्य्याः ! किं भणथ ? अस्ति किं तस्य चन्दनदासस्य मोक्षोपायइति ? । कुतस्तस्याधन्यस्य मोक्षोपायः ? इदं पुनरस्ति तस्य, यदि अमात्यराक्षसस्य गृहजनं समर्पयति । किं भणथ ? एष शरणागतवत्सल आत्मनो जीवितकारणे न इदमकार्य्यं करिष्यतीति? आर्य्याः ! यद्येवं तेन हि अवधत्त तस्याशुभगगतिम् । एतावानिदानीं युष्माकं प्रतीकारः । स० ।

(१) हा धिक्, हा धिक् ; अस्मादृशानामपि कथं नित्यचारित्रभङ्गभीरूणां, चौरजनानामिव, मरणं प्राप्तमिति । नमः कृतान्तस्य । अथ वा । नृशंसानां उदासीनेषु इतरेषु वा विशेषोऽस्ति ? ।

तथाहि ।

(२) मुक्त्वा आमिषाणि मरणभयेन तृणैर्जीवन्ति ;

व्याधानां मुग्धहरिणान् हन्तुं, को नाम निर्बन्धः । स०

ये हरिणा आमिषाणि मुक्त्वा मरणभयेन तृणैर्जीवन्ति तान् मुग्ध-हरिणान् हन्तुं व्याधानां कोनिर्बन्धः इत्यर्थः ।

समन्तादवलोक्य। भाव! पिअवअस्स! जिसुदास! कधं पडि, वअणं बि मे ण पडिबज्जसि त्ति; अध वा, दुल्लहा क्खु ते पुरिसा जे इमस्सिं काले दिट्ठिबधेबि चिट्ठन्ति (१)।

चन्द। सवाष्पम्। एदे अह्मपिअवअस्सा, अंसुबादमेत्तकेण किदपदीआरा, ससरीरेहिं णिव्वत्तमाणा, परिवड्ढमाणसोअदीणवअणा, वाप्पगरुआए दिट्टीए मं अणुगच्छन्ति (२)।

चाण्डालौ। परिक्रम्यावलोक्य च अज्ज! चन्दणदास! पत्ताग़दोसि बज्झट्ठाणं, ता विसज्जेहि घरअणम् (३)।

चन्द। अज्जे! कुटुम्बिणि! णिवत्तस्स तुमं सपुत्ता; बज्झट्ठाणं क्खु एदं, अदो अबरं अभूमि अनुगच्छिदुम् (४)।

कुटु। सवाष्पम्। परलोअं पत्थिदो अज्जो, ण उण देसन्तरं, ता अजोग्गो दाणीं एसो कुलजणस्स णिवत्तिदुम् (५)।

---

(१) भाव! प्रियवयस्य! जिष्णुदास! कथं प्रतिवचनमपि मे न प्रतिपद्यसे इति; अथ वा, दुर्लभाः खलु ते पुरुषाः, ये इमस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति। स०।

(२) एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतप्रतीकाराः, स्वशरीरैर्निवर्त्तमानाः, परिवर्द्धमानशोकदीनवदना, वाष्पगुर्व्या दृष्ट्या मामनुगच्छन्ति। स०।

(३) आर्य्य! चन्दनदास! प्रत्यागतोऽसि बध्यस्थानं, तत् विसर्जय गृहजनम्। स०।

(४) आर्य्ये! कुटुम्बिनि! निवर्त्तस्व, त्वं सपुत्रा; बध्यस्थानं खल्विदम् अतोऽपरं अभूमिः खलु अनुगन्तुम्। स०

(५) परलोकं प्रस्थित आर्य्यो, न पुनर्देशान्तरं, तदयोग्य मिदानीं एवत् कुलजनस्य निवर्त्तितुम्। स०

चन्द । अज्जे ! सच्चं, मित्तकज्जेण मम विणासो, ण पुरिस दोसेण ; ता किं हरिसट्ठाणे वि रोदिसि त्ति (१) ?

कुटु । अज्ज ! जइ एवं ता अणुचिदं दाणीं कुलअणस्स णिवत्तिदुम् (२) ।

चन्द । अध किं ववसिदं अज्जाए (३) ?

कुटु । सवाष्पम् । भत्तुणो चलणमणुगच्छन्तीए अज्जाणुग्गहो होदु (४) ।

चन्द । अज्जे ! दुव्ववसिदं एदं दे ; ता दाणीं अज्जाए अअं असुणिदलोअव्ववहारो कुमारो अणुगेह्लिदव्वो त्ति (५) ।

कुटु । अणुगेह्लन्तु णं पसण्णाओ भअवदीओ कुलदेवदाओ जाद ! पुत्तअ ! पणमअ अपच्छिमस्स पिदुणो पाएसुं (६) ।

पुत्र । पादयोर्निपत्य । ताद ! मए तादविरहिदेण किं अणु-चिट्ठिदव्वम् (७) ?।

---

(१) आर्य्ये ! सत्यं, मित्रकार्य्येण मम विनाशो, न पुरुषदोषेण ; तत् किं हर्षस्थानेऽपि रोदिषि ? स०

(२) आर्य्य ! यद्येवं तदनुचितम् इदानीं कुलजनेन निवर्त्तितुम् । स०

(३) अथ किं व्यवसितम् आर्य्यया ? स०

(४) भर्त्तुश्चरणमनुगच्छन्त्याः आर्य्यानुग्रहो भवतु । स०

(५) आर्य्ये ! दुर्व्यवसितमिदं ते ; तदिदानीमार्य्यया अश्रुतलोक व्यवहारः कुमारोऽनुग्रहीतव्यइति । स०

(६) अनुगृह्लन्तु एनं प्रसन्ना भगवत्यः कुलदेवताः । जात ! पुत्रक ! प्रणम (अपश्चिमस्य पुनरागमनशून्यस्य) पितुः पादयोः । स०

(७) तात ! मया तातविरहितेन किमनुष्ठातव्यम् ? स०

चन्द । पुत्त, चाणक्कविरहिदे देसे वसिदव्वम् (१) ।

चाण्डालौ । अज्ज! चन्दणदास! णिखादे सूले, ता सज्जो दाणीं होहि (२) ।

कुटु । अज्जा ! परित्ताअध परित्ताअध (३) ।

चन्द । भद्दमुह ! मुहुत्तअं चिट्ठ । अइ जीविदवच्छले ! किं एत्थ आक्कंदसि ? सग्गं गदा क्खु ते देवा णन्दा जे दुखिदं इत्थीजणं पदिदिणं अणुकम्पन्ति (४) ।

प्रथमश्चण्डालः । अले वेणुवत्तका ! गेह्ण इमं चन्दणदासं, घलअणो सअंज्जेव गमिस्सदि (५) ।

द्वितीयश्चण्डालः । अले वज्जलोमका ! एसे गेह्णामि (६) ।

चन्द । भद्दमुह ! चिट्ठ मुहुत्तअं जाव पुत्तअं परिस्सआमि । इति पुत्त्रं परिष्वज्य मूर्द्धि समाघ्राय । जाद ! पुत्तअ !

---

(१) पुत्त्र ! चाणक्यविरहिते देशे वस्तव्यम् स० ।

(२) आर्य्य ! चन्दनदास ! निखातं शूलं, तत्सज्ज इदानीं भव स० ।

(३) आर्य्याः ! परित्रायध्वम्, परित्रायध्वम् । स०

(४) भद्रमुख ! मुहूर्त्तं तिष्ठ, अयि जीवितवत्सले ! किमत्र आक्रन्दसि स्वर्गं गताः खलु ते देवा नन्दा ये दुःखितं स्त्रीजनं प्रतिदिनमनुकम्पन्ते स० ।

(५) अरे वेणुवेत्रक ! गृहाणेमं चन्दनदासं, गृहजनः स्वयमेव गमिष्यति स० ।

(६) अरे वज्रलोमक ! एष गृह्णामि । स०

अवस्सं भविदव्वेवि विणासे मित्तकज्जं समुव्वहमाणो विणास मणुभवामि (१) ।

पुत्र । ताद ! एदं क्खु भणिदव्वं किं कुलक्कमो क्खु एसो अम्हाणं । इति पादयोः पतति (२) ।

चाण्डा । अले, गेह्न वज्जलोमआ (३) ।

चाण्डालौ गृहीतश्चन्दनदासमारोपयितुं शूले ।

कुटु । अज्जा ! परित्ताअध परित्ताअध (४) ।

प्रविश्य अपटीक्षेपेण राक्षसः । भवति ! न भेतव्यं, भेतव्यं, भो भोः सेनापते ! न खलु व्यापादनीयश्चन्दनदासः । कुतः ;

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत्पुरा,
मित्राणां व्यसने महोत्सवइव स्वस्थेन येन स्थितम् ।
आत्मा यस्य बधाय वः परिभवक्षेत्रोकृतोऽपि, प्रिय
स्तस्येयं मम मृत्युलोकपदवी बध्यस्रगाबध्यताम् ॥(५)

---

(१) भद्रमुख ! तिष्ठ क्षणं, यावत् पुत्रकं परिष्वजामि । जात ! पुत्रक ! अवश्यं भवितव्येऽपि विनाशे मित्रकार्य्यं समुद्वहमानो विनाशमनुभवामि । स०

(२) तात ! इदं खलु भणितव्यं, किं कुलक्रमः खलु एसोऽस्माकम् ।स०

(३) अरे गृहाण वज्जलोमक ! । स०

(४) आर्य्याः । परित्रायध्वम् परित्रायध्वम् । स०

(५) येन मया रिपोः कुलमिव विनश्यत् स्वामिनः नन्दस्य कुलं पुरा दृष्टं न तत्र प्रतिकृतमित्यर्थः । येन च मित्राणां व्यसने सत्यपि महोत्सवे इव सुस्थेन अनाकुलेन स्थितम् । वो युष्माकं परिभवस्य तिरस्कारस्य क्षेत्रीकृतः पात्रीकृतोऽपि यस्यात्मा प्राणः प्रियः न वियुज्यते इत्यर्थः तस्य मम बधाय इयं मृत्युपदवी मरणमार्गरूपा बध्यस्रग्

चन्द। (विलोक्य सवाष्पम्।) अमच्च! किं एदं दे ववसिदम् (१)?

राक्ष। त्वदीयस्य सुचरितैकदेशस्यानुकरणं किल।

चन्द। अमच्च! सव्वं वि मे णिप्फलं एदं पआसं करन्तेण ण मे पिअं अणुचिट्ठिदं अमच्चेण (२)।

राक्ष। सखे! चन्दनदास! कृतमुपालम्भेन स्वार्थप्रधानो हि जीवलोकः। भद्रमुख! अयमर्थो निवेद्यतां तावद्दुरात्मने चाणक्याय।

चाण्डालौ। अध किं त्ति?

राक्ष।

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विना प्रलघुतामौशीनरीयं यशः।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते तव गतो बध्यत्वमेषोऽस्मि सः॥(३)

---

बध्यस्य चिह्नभूता माला आबध्यतामामुच्यताम् कण्ठे इति शेषः प्रार्थनायां लोट्। चन्दनदासं विमुच्य मां जहीत्यर्थः।

(१) अमात्य! किमिदं ते व्यवसितम्? स०

(२) अमात्य, सर्व्वमपि मे निष्फलम्; इमं प्रयासं कुर्वता न मे प्रियमनुष्ठितम् अमात्येन। स०

(३) असज्जनानां दुःशीलानां रुचिरनुरागो यत्र तस्मिन् दुष्टजनप्रीतिकारके अतएव दुष्काले दुष्टकाले कलौ प्राणैः प्राणदानेन परमितरं जनं रक्षता पालयता येन चन्दनदासेन औशीनरीयम् शिविसम्बन्धि यशः प्रलघुतां तनुतां न्यक्कारमित्यर्थः नीतम् प्रापितम् शिविना सत्यकाले तथाचरणेऽपि कलिकाले तथाचरणं दुष्करमेवातोऽस्य

प्रथमः । अले वेणुवत्तआ, तुमं दाव सेट्ठिचन्दणदासं गेह्लिअ, इमस्स मसाणपादवस्स छाआए मुहुत्तअं चिट्ठ, जाव अहं अज्ज चाणक्कस्स णिवेदेमि, जधा गहिदो अमच्चलक्खसो त्ति (१)।

द्वितीयः। अले वज्जलोमआ! एवं होदु (२)।

इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः ।

प्रथमः। राक्षसेन सह परिक्रम्य। के के एत्थ दुआलिआणं णिवेदेध दाव, णन्दकुलसेलसञ्चअचूलणकुलिसस्स मौलिअकुलपदिट्ठाविदधम्मसञ्चअस्स अज्जचाणक्कस्स (३)।

---

भिवितोप्याधिक्यमिति व्यतिरेकालङ्कारः। विशुद्धः निर्दोषः आत्मा अन्तःकरणं यस्य तथाभूतेन येनेत्यनुषङ्गः चन्दनदासेन सुचरितैः अहिंसादिभिः बुद्धानां बुद्धेन प्रोक्तमधीयानां प्रोक्तार्थतद्धितस्य बहुवचने लुक्। सौगतानामपि चेष्टितं क्लिष्टमधरीकृतमित्यर्थः स पूजार्हः उक्तगुणवत्त्वेन पूजां सम्मानमर्हति सम्मानयोग्योऽपि यत्कृते यस्य मम कृते मत्कुटुम्बत्राणायेत्यर्थः तव बध्यत्वं गतः प्राप्तः। सोऽहं राक्षसः एषोऽस्मि बध्यस्थाने आगतोऽस्मीत्यङ्गुल्यात्मनिर्देशः। एत इति पाठस्तु समीचीनः एतः आगत इत्यर्थः।

(१) अरे वेणुवेत्रक! त्वं तावत् श्रेष्ठिचन्दनदासं गृहीत्वा, अस्य श्मशानपादपस्य छायायां मुहूर्त्तं तिष्ठ, यावदहं आर्य्यचाणक्यस्य निवेदयामि, यथा गृहीतोऽमात्यराक्षस इति। स०

(२) अरे वज्रलोमक! एवं भवतु। स०

(३) के केऽत्र दौवारिकाणां निवेदयत तावत्, नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य मौर्य्यकुलप्रतिष्ठापितधर्मसञ्चयस्य आर्य्यचाणक्यस्य। स०

राक्ष । स्वगतम् । एतदपि नाम राक्षसेन श्रोतव्यम् ।

चण्डा । एसो क्खु अज्जणीदिणिअमसंजमिदबुद्धिपुलिसआले गहिदे अमच्चरक्खसे त्ति (१) ।

ततः प्रविशति जवनिकाऽऽवृतशरीरो मुखमात्रदृश्यः सहर्षश्चाणक्यः ।

चाण । भद्र ! कथय, कथय ।

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी ?
पाशैः केन सदागतेरगतिता सद्यः समासादिता ? ।
केनानेकपदानवासितशठः सिंहोऽर्पितः पञ्जरे ?
भीमः केन चलैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ? (२) ॥

---

(१) एष खलु आर्य्यनीतिनियमसंयमितबुद्धिपुरुषकारो गृहीतोऽमात्यराक्षस इति । स०

(२) उत्तुङ्गानां महतीनां शिखानां ज्वालानां कलापेन कपिलः पिङ्गलः शिखी वह्निः पटान्ते वसनाञ्चले केन ? बद्धः संयमितः । सदागतेः सततगतिमतो वायोः अगतिता गतिशून्यता गतिरोध इति यावत् सद्यः हठात् पाशैः रज्जुग्रन्थिभेदैः केन ? समासादिता प्रापिता कृतेत्यर्थः । अनेकपानां गजानां दानेन मदजलेन वासिता सुरभीकृता शठा जटा यस्य तथाभूतोमत्तकरीन्द्रघातकः सिंहः पञ्जरे केन ? अर्पितः स्थापितः । चलाः चपला एके महान्तः नक्रा मकराश्च जलजन्तुभेदा यत्र तादृशः अर्णवः समुद्रः दोर्भ्यां बाहुभ्यामेव न वहित्रादिना केन ? तीर्णः । तथा च अतिदृप्तस्य राक्षसस्य संयमनं वह्न्यादेः पटाञ्चले बन्धनादिकमिव अतिदुष्करम् । राक्षसस्य दुर्दमत्वकथनेन आत्मना च तस्य दमनात् आत्मनोऽतीव दुष्करकार्य्यकारित्वेन गर्व्वः सूचित इति भावः ।

चण्डा। णं णीदिणिउणबुद्धिणा अज्जेण ज्जेव (१)।

चाण। भद्र! मा मैवं। नन्दकुलद्वेषिणा दैवेनेति ब्रूहि।

राच। विलोक्य स्वगतम्। अये, अयं स दुरात्मा, अथ वा अयं स महात्मा कौटिल्यः।

यतः। आकरः सर्व्वशास्त्राणां, रत्नानामिव सागरः।

गुणैर्न परितुष्यामो, यस्य मत्सरिणो वयम्॥ (२)

चाण। विलोक्य सहर्षम् स्वगतम्। अये, अयममात्यराक्षसः, येन महात्मना,

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः।

चिरमायासिता सेना वृषलस्य, मतिश्च मे॥(३)

जवनिकामपनीयोपसृत्य च। भो भो अमात्यराक्षस! विष्णुगुप्तोऽभिवादयते।

---

(१) ननु नीतिनिपुणबुद्धिना आर्य्येणैव। स०

(२) स्वयं चाणक्यस्य दुरात्मत्वमभिधाय अथ वेत्यनेन तदपोह्य यत्तस्य माहात्म्यमुक्तं तत् समर्थयितुं हेतुमुपन्यस्यति यत इत्यादि। योऽयं चाणक्य इति शेषः रत्नानां सागर इव सर्व्वशास्त्राणां तज्ज्ञानानामाकरः उत्पत्तिस्थानं खनिरित्यर्थः। मत्सरिणोऽपि शुभद्वेषवन्तोऽपि वयं यस्य गुणैः न परितुष्यामः।

(३) दीर्घजागरे सततप्रतीकारचिन्ताहेतुत्वात् सावधानत्वे अनालस्ये इति यावत् हेतुभिः साधनैः गुरुभिर्महद्भिः कल्पनाया रण-सज्जायाः इदमेवं करणीयमेवं नेत्येवं संकल्पविशेषस्य च ये क्लेशाः दुःखानि तैः वृषलस्य चन्द्रगुप्तस्य सेना मम मतिश्च आयासिता कृतायासा येनेति गद्यस्थं कर्त्तृपदमत्रान्वेति।

राक्ष। स्वगतम्। अमात्य इति लज्जाकरमिदमिदानीं विशेषणपदम्। प्रकाशम्। भो भो विष्णुगुप्त! न मां श्वपाकस्पर्श-दूषितं स्प्रष्टुमर्हसि।

चाण। अमात्य राक्षस! नायं श्वपाकः, अयं खलु दृष्टपूर्व्व एव भवता सिद्धार्थकनामा राजपुरुषः। योऽप्यसौ द्वितीयः, सोऽपि समि (सुसि)द्धार्थकनामा राजपुरुषएव; ताभ्यामेव सह सौहार्द्दमुत्पाद्य, शकटदासोऽपि तपस्वी(१) तं तादृशमजानन्नेव कपटलेखं मयैव लेखितः। (२)

राक्ष। आत्मगतम्। दिष्ट्या शकटदासं प्रति अपनीतो विकल्पः। (३)

चाण। किं बहुना, संक्षेपतः कथयामि;

ये ते भद्रभटादयः, स च तथा लेखः, स सिद्धार्थक
स्तच्चालङ्करणत्रयं, स भवतो मित्रं भदन्तः किल।
जीर्णोद्यानगतः स चार्त्तपुरुषः क्लेशः स च श्रेष्ठिनः,
सर्व्वोऽसौ मम- । इत्यर्द्धोक्ते लज्जां नाटयति।
सर्व्वोऽसौ वृषलस्य वीर! भवता संयोगमिच्छोर्नयः (४)।

---

(१) तपस्वी अनपराधी प्रागुक्तकूटलेखस्य जानता तेनालेखनेन दोषशून्यत्वात्।

(२) मया हेतुकर्त्रा लेखितः लेखितवान् लिखेर्ण्यन्तात् भावे क्त अर्श आद्यचि लिखित इति सिद्धम्।

(३) विकल्पः संशयः शकटदासेन तथाचरितं नवेत्याकारः, अपनीतः अनेन वाक्येनेति शेषः ;

(४) ते चन्द्रगुप्तादपरागहेतुमुक्त्वा मलयकेतुं समाश्रिताः भवतोऽनुभूतपूर्व्वा इत्यर्थः भद्रभटादयः आदिपदेन भागुरायणडिङ्गुरातादयः

तदेष वृषलस्त्वां द्रष्टुमागच्छति । पश्यैनम् ।

राक्ष । स्वगतम् । का गतिः । प्रकाशम् । यएष पश्यामि । (१)

। ततः प्रविशति, सेवकैरनुगम्यमानो राजा ।

राजा । स्वगतम् । विनैव युद्धादार्य्येण पराजितं दुर्जयमरिकुलमिति, यत् सत्यं, (२) लज्जितइवास्मि । मम ।

फलयोगमवाप्य सायकानामनियोगेन विलक्षतां गतानाम् ।

---

ग्राह्याः । एवमुत्तरत्रापि तच्छब्देन राक्षसस्यानुभूतिविषयता सूचिता । तथा सिद्धार्थकेन प्रकाशितः "स्वस्ति यथास्थाने इत्यादि" कृत्रिमः लेखः । स बधार्थमुद्युक्तात् राजपुरुषात् शकटदासमपवाह्य भवन्तमाश्रितः सिद्धार्थकः । तत् मत्प्रणिधिभूतेभ्यो वणिग्भ्यः पर्व्वतेश्वरधृतपूर्वं भवता क्रीतमलङ्करणत्रयम् । भवतश्च मित्रं मित्रत्वेनाङ्गीकृतः भदन्तः जीवसिद्धिनामा क्षपणकः येन विषकन्यया पर्वतेश्वरबधः भवत्कर्त्तृक एव न मत्कर्तृक इति मलयकेतुसमीपे प्रकाशितम् । स जिष्णुदासमित्रत्वेनात्मानं तव समीपे प्रकाश्य तद्विनाशासहिष्णुतया आर्त्तः आत्मविनाशनाय पाशहस्तः पुरुषः । स श्रेष्ठिनः चन्दनदासस्य बधार्थं श्मशाननयनहेतुकः क्लेशः । इत्युक्तसर्वव्यापारस्य आत्मकर्तृकत्वमित्याह सर्व्वोऽसौ ममेति स्वचरितस्य स्वयमेव वर्णनमनुचितमित्यर्द्धमुक्त्वा तदपहृत्य चाह हे वीर ! भवता सह संयोगं सन्धिमिच्छोः वृषलस्य चन्द्रगुप्तस्यैव न ममेत्याशयः नयोनीतिः ।

(१) य एष आगच्छतीति चाणक्यवाक्योक्तं क्रियापदमत्रान्वेति । पश्यामीत्यत्र तमित्यध्याहार्य्यम् ।

(२) "असन्दिग्धे तु यत् सत्य"मित्युक्तेः यत् सत्यमसन्दिग्धमित्यर्थः ।

स्वशुचेव भवत्यधोमुखानां निजतूणीशयनव्रतप्रतिष्ठा (१)।
अथ वा।
विगुणीकृतकार्म्मुकोऽपि जेतुं भुवि जेतव्यमसौ समर्थएव।
स्वपतोऽपि ममेव यस्य तन्त्रे गुरवो जाग्रति कार्य्यजागरूकाः(२)।

चाणक्यमुपसृत्य। आर्य्य! चन्द्रगुप्तः, प्रणमति;

चाण। वृषल! सम्पन्नास्ते सर्व्वाशिषः, तदभिवादयस्व तत्र-भवन्तं अमात्यराक्षसं, पैतृक (३) स्तवायममात्यमुख्यः।

---

(१) अनियोगेन स्वकार्य्ये रिपुबधादौ प्रेरणाभावेन विलक्षतां शरव्यशून्यतां सलज्जत्वञ्च गतानां प्राप्तानां स्वशुचा शोकेनेव अधोमुखानां तूणीस्थतया ऊर्द्ध्वनयनाभावेनावनताग्रतया स्थितानां लज्जितत्वेन शोकाकुलतया नतमुखानाञ्च सायकानां वाणानां ममेति गद्यस्थं सम्बन्धिपदमत्रान्वेति फलेन लौहमयाग्रकीलेन व्रतसमाप्तिजन्यपुण्यादिना च योगं सम्बन्धमवाप्य प्राप्यापि निज तूणां निजाधारे शरधौ यच्छयनं तद्रूपस्य व्रतस्य प्रतिष्ठा समाप्ति र्भवति व्रतसमाप्तौ हि फलप्राप्तिः शास्त्र-सिद्धा वाणानाञ्च तूणीशयनरूपे व्रते फलस्य रिपुजयस्य योगात् प्रतिष्ठेवेत्युत्प्रेक्षितम्।

(२) स्वपतः राज्यचिन्तानाकुलतया तदर्थं चेष्टारहितस्य यस्य मम इव राज्यतन्त्रे राज्यकार्य्यस्य सन्धिविग्रहादेश्चिन्तायां गुरवः विनेतार एव जागरूकाः सावधानाः सन्तः जाग्रति यतन्ते। असौ नृपः विगुणी-कृतकार्म्मुकोऽपि निष्फलीकृतधनुष्कः अनारोपितमौर्वीकचापोऽपि वा भुवि जेतव्यं रिपुं जेतुं समर्थएव अहमिवेति शेषः।

(३) पितृत आगतः पैतृकः मौर्य्यस्य नन्देन शूद्रायामुत्पादितत्वात्

राक्ष। स्वगतम्। योजितोऽनेन सम्बन्धः।

राजा। राक्षसमुपसृत्य। आर्य्य! चन्द्रगुप्तोऽहमभिवादये।

राक्ष। विलोक्य स्वगतम्। अये, अयं चन्द्रगुप्तः। य एषः

वालएव हि लोकेन सम्भावितमहोदयः।

क्रमेणारूढवान्राज्यं, यूथैश्वर्य्यमिव द्विपः (१)॥

प्रकाशम्। राजन्! विजयस्व।

राजा। आर्य्य!

जगतः किं न विजितं मयेति प्रविचिन्त्यताम्,।

गुरौ षाड्गुण्यचिन्तायामार्य्ये त्वयि च जाग्रति (२)।

राक्ष। स्वगतम्। स्पृशति मां कौटिल्यशिष्यो भृत्यभावेन,(३)

---

तस्य नन्दात्मजत्वेन तत्सम्बन्धात् पैतृकत्वम् अमात्येषु मुख्यः अयं राक्षसस्तेनैन मभिवादयस्व।

(१) लोकेन सम्भावितः प्राक् समर्थितः महान् उदयो यस्य तादृशोऽयं बालः अल्पवयाः चन्द्रगुप्तः। बालोद्विपो गजः यूथैश्वर्यं युथाधिपत्यमिव राज्यं क्रमेण आरूढ़वान्।

(२) षड्गुणा एव षाड्गुण्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तस्य सन्धिविग्रहादीनां चिन्तायामवेक्षणे गुरौ चाणक्ये आर्य्ये पैतृकमानवत्त्वादतीव मान्ये त्वयि च जाग्रति दत्तावधानतया प्रवर्त्तमाने सति जगतः किं न मया विजितमपि तु सर्व्वं विजितमिति प्रविचिचिन्त्यतां ज्ञायताम्।

(३) कौटिल्येन शिष्यः अनुशिष्ट इत्यर्थः कार्त्तवीर्य्यो विजेय इत्यादिवत् भूते कृत्यप्रत्ययः। तेन नायं स्वतो विनीतः किन्तु परप्रेरित इति भावः भृत्यभावेन विनेयतया मां स्पृशति तवाहंविनेय इत्युक्ता अवलम्बते।

अथ वा विनयेनैव, (१) चन्द्रगुप्तस्य मत्सरस्तु मे विपरीतं कलयति! (२) सर्व्वथा स्थाने यशस्वी चाणक्यः। कुतः

द्रव्यं जिगीषुमधिगम्य जडात्मनोऽपि
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा।
अद्रव्यमेत्य तु विविक्तनयोऽपि मन्त्री
शीर्णाश्रयः पतति कूलजवृक्षवृत्त्या (३)

चाण। अमात्य! राक्षस! अपीष्यते चन्दनदासस्य जीवितम्?।

राक्ष। भो विष्णुगुप्त! कः सन्देहः?

चाण। अमात्य! राक्षस! अगृहीतशस्त्रेण भवता नानुगृ-

---

(१) आपाततः चन्द्रगुप्तस्य स्वतो विनयाभावमुक्त्वा तदपोह्य विनयेनैव तथाकथनमित्याह विनयेनैवेति न चाणक्योपदेशेनेत्येवकारव्यवच्छेद्योऽर्थः।

(२) चन्द्रगुप्तस्य चन्द्रगुप्ते योमत्सरः मम शुभद्वेषः स एव तदुक्तं विपरीतमन्यथास्थितमन्यरूपेण कलयति अवगमयति।

(३) द्रव्यं सत्पात्रं जिगीषुमधिगम्य स्थितस्य जडात्मनोऽपि नेतुः शिक्षकस्य यशस्विनि यशोदायके पदे स्थाने प्रतिष्ठा यशोलाभ इत्यर्थः। अद्रव्यमसत्पात्रं जिगीषुमेत्य प्राप्य तु विविक्तनयोऽपि विवेचितनीतिरपि मन्त्री नेता शीर्णाश्रयः सन् कूलजस्य नदीतीरस्थस्य वृक्षस्य वृत्त्या तेन तुल्यमित्यर्थः पतति कार्य्यसाधनाय नालं प्रत्युत स्वपतनायालं भवतीत्यर्थः। तथा च चन्द्रगुप्तस्य सत्पात्रत्वात् तदाश्रयेण चाणक्यस्य कार्य्यपारगतया यशोलाभः, मलयकेतोस्त्वासत्पात्रत्वात्तदाश्रयेण न कार्य्यलाभः प्रत्युत आत्मपतनमेव मम जातमिति भावः।

ह्यते (१) इ"यत, इत्यतः सन्देहः। तद्यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यतामिदं शस्त्रम्।

राच। भो विष्णुगुप्त! मा मैवम्! अयोग्या वयमेतस्य ग्रहणे, विशेषतस्त्वया गृहीतस्य शस्त्रस्य।

चाण। अमात्य! राक्षस! योग्योऽहमयोग्यो भवानिति कथमेतत्? पश्य,

अश्वैः सार्द्धमजस्रदत्तकविकाक्षामैरशून्यासनान्
स्नानाहारविहारपानशयनस्वेच्छासुखैर्व्वर्ज्जितान्।
माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः,
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान् (२)॥

---

(१) नानुगृह्यते नानुकूलीक्रियते कृतसन्धानस्य तत्कार्य्यकरणाय शस्त्रग्रहणस्यावश्यकत्वात्। गृहीते च अमात्यपदवीग्रहणसूचके शस्त्रे सन्धानं निश्चितं स्यात् अगृहीते सन्देह इति भावः।

(२) दृप्तानां गर्व्वितामरीणां दर्पच्छिदः दृप्तपरगर्वापहारकस्य तव राक्षसस्य अतिपौरुषस्य अत्यन्तविक्रमस्य माहात्म्यात् वैभवात् अशून्यासनैः न शून्यं आरोहिवर्ज्जितं स्वारोहियोग्यमासनं येषां युद्धार्थं सततसज्जितैरित्यर्थः अजस्रं सततं दत्ताभिः मुखे योजिताभिः कविकाभिः वल्गाभिः क्षामैः क्षीणैः अश्वैः घोटकैः सह तानपि सततक्लिष्टानित्यर्थः। स्नानादिभिः स्वेच्छासुखैः यथेच्छव्यापारैर्व्वर्ज्जितान् रहितान्, परिकल्पनाया रणसज्जाविशेषस्य व्यतिकरो येषां ते प्रोच्छूनो महान् वंशो येषां ते पश्चात् कर्म्मधारयः तथाभूतान् एतान् गजान् पश्य भवद्विक्रममाहात्म्यात् सेनाङ्गहस्त्यश्वादेर्न विश्राम इति तव नायोग्यतेति भावः।

अथ वा किमनेन। न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति ।

राक्ष । स्वगतम् ।

नन्दस्नेहकणाः स्पृशन्ति हृदये, भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव पाणिपयसा च्छेद्यास्तएव द्रुमाः ।
शस्त्रं मित्रशरीरकेषु सरुषा व्यापारणीयं, सदा
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ।(१)

प्रकाशम् । भो विष्णुगुप्त ! उपानय खड्गम्, नमः सर्व्वकार्य्य प्रतिपत्तिहेतवे सुहृत्स्नेहाय ; का गतिरेष सज्जोऽस्मि ।

चाण । सहर्षं शस्त्रमर्पयित्वा । वृषल ! वृषल ! अमात्यराक्षसेनेदानीं गृहीतशस्त्रेणानुगृहीतो, दिष्ट्या वर्द्धते भवान् ।

राजा । आर्य्यप्रसादएष चन्द्रगुप्तेनानुभूयते ।

---

(१) नन्दानां स्नेहस्य कणा लेशाः तेषां मृतत्वात् तदन्वयस्यान्यस्य उच्छिन्नप्रायत्वाच्च तत्स्नेहस्य लेशा इत्युक्तम्। इदानीमपि तेषां मृतत्वेऽपि तद्गुणस्मरणेन भक्तवत्सलत्वेन च हृदये स्पृशन्ति सम्बध्नन्ति । तत्कथं तेषां नन्दानां विद्विषां भृत्योऽस्मि भरणीयः दासतामाप्तः स्यामित्यर्थः । ये द्रुमाः द्रुमतुल्याः स्वयमेव पाणिपयसा हस्तरूपजलेन सिक्ता वर्द्धिताः ते कथम् स्वयमेव च्छेद्याः स्युः । किञ्च मित्रस्य नन्दकुलबान्धवस्य शरीरेषु शस्त्रं कथं व्यापारणीयम् । चन्द्रगुप्तपक्षाश्रयणे च नन्दमित्रबधार्थमुद्योगः कार्य्यः स च सर्वथापि स्वयं सम्बर्द्धितवृक्षच्छेदनमिवानुचितमिति विधेर्भाग्यस्य कार्य्याणां गतयः आलोचनागोचरं विचारस्य विषयतां न यान्ति। तथाच दैवगतिरेवात्र कारणं मया किं विचारणीयमिति भावः ।

प्रविश्य पुरुषः । जअदु जअदु अज्जो अज्ज ! एसो क्खु भद्दभ-डभाउराअणप्पमुहेहिं सञ्जमिअकलचलणो मलयकेदू पडि-हारभूमिए अवत्थापिदो ; ता एवं सुणिअ, एत्थ अज्जो पमा-णम् (१) ।

चाण । अयं श्रुतम् भद्र ! निवेद्यताममात्यराक्षसाय, अयमि दानीं राजकार्य्यं करिष्यति ।

राज । स्वगतम् । कथं, दासीकृत्येदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः । का गतिः । प्रकाशम् । राजन् ! चन्द्र-गुप्त ! विदितमेव यथा वयं मलयकेतौ किञ्चित्कालान्तरमुषि-तास्तत्परि रक्ष्यन्तामस्य प्राणाः ।

राजा । चाणक्यमुखमवलोकयति ।

चाण । वृषल ! प्रतिमानयितव्योऽयममात्यराक्षसस्य प्रथमः प्रणयः । पुरुषमवलोक्य । भद्र ! मद्वचनादुच्यन्तां भद्रभटप्रभृत यः, अमात्यराक्षसविज्ञापितो, देवश्चन्द्रगुप्तः प्रयच्छति, मल यकेतवे पित्र्यमेव विषयमतो गच्छन्तु भवन्तः सहानेन, प्रति ष्ठिते चास्मिन् पुनरागन्तव्यम् ।

पुरु । जं अज्जो आणवेदि त्ति । (२)

चाण । तिष्ठ तावत् भद्र !, भद्र! एवमपरमुच्यतां विजय-पालो दुर्गपालश्च, अमात्यराक्षसस्य गृहीतशस्त्रस्य प्रीत्या देव-

---

(१) जयतु जयत्वार्य्यः ! आर्य्य ! एष खलु भद्रभटभागुरायण-प्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूम्यामवस्थापितस्तस्मादिदं श्रुत्वा आर्य्यः प्रमाणमिति । स०

(२) यदार्य्य आज्ञापयति इति स०

श्चन्द्रगुप्तः समाज्ञापयति एष तावत् श्रेष्ठी चन्दनदासः पृथिव्यां सर्व्वेषु नगरेषु श्रेष्ठिपदमारोप्यतामिति ।

पुरु । जं अमच्चो आणवेदि त्ति (१) । निष्क्रान्तः ।

चाण । चन्द्रगुप्त ! किं ते भूयः प्रियं करोमि ?

राजा । किमतःपरं प्रियमस्ति ।

रात्तसेन समं मैत्री, राज्ये चारोपिता वयम् ।
नन्दाश्चोन्मूलिताः सर्व्वे, किं कर्त्तव्यमतः परम् ॥

चाण । विजये ! उच्यतां दुर्गपालो, विजयपालश्च अमात्य राक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति, विना हस्त्यश्वं क्रियतां सर्व्वबन्धमोक्ष इति ; अथ वा, अमात्यराक्षसे नेतरि किं हस्त्यश्वेन प्रयोजनं ; तदिदानीम् ।

सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम् ।
पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखा (२) ॥

इति शिखां बध्नाति ।

प्रती । जं अज्जो आणवेदि त्ति निष्क्रान्ता । (३)

---

(१) यदमात्य आज्ञापयति इति सं० ।

(२) वाहनेन अश्वेन हस्तिना च सह सर्वबन्धनं सर्व्वेषां बन्धनं मुच्यतां निर्ग्रन्थीक्रियताम् किन्तु पूर्णप्रतिज्ञेन नन्दान्वयोन्मूलनेन तीर्णप्रतिज्ञार्णवेन मया केवलं शिखा बध्यते तस्य आ नन्दोन्मूलनात् उन्मुक्तत्वात् इदानीञ्च तदुन्मूलनात् बन्धनमुचितं नान्यस्य हस्त्यादेर्बन्धनमपेक्षितं कृतकृत्यत्वादिति भावः ।

(३) यदार्य्य आज्ञापयति इति सं० ।

चाण। अमात्य! राक्षस! तदुच्यतां, किं ते भूयः प्रियमुपकरोमि।

राक्ष। किमतः परमपि प्रियमस्ति, यदि न परितोषः तदिदमस्तु भरतवाक्यम्।

वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपाम्
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री।
म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः
स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः॥

इति निष्क्रान्ताः सर्व्वे।

## इति सप्तमोऽङ्कः।

इति विशाखदत्तविरचितम् मुद्राराक्षसं नाटकं समाप्तम्।

---

(१) अतनुबलां महाबलां अनुरूपां योग्यां वाराहीं शौकरीं तनुमास्थितस्य आश्रितस्य आत्मयोने र्यस्य भगवतः दन्तकोटिं दन्ताग्रं प्रलयपरिगता प्रलयस्था भूतानां प्राणिनां धात्री भुमिः प्राक् शिश्रिये श्रिता इदानीञ्च म्लेच्छैः उद्वेज्यमाना उत्पीड्यमाना सा राजमूर्त्तेः चन्द्रगुप्तरूपमूर्त्तिधारकस्य तस्यैव भगवतः पीवरं स्थूलं भुजयुगं श्रिता। स विष्णुमूर्त्तिरसौ चन्द्रगुप्तः पार्थिवः श्रीमद्बन्धुभृत्यः सन् चिरं महीमवतु पालयतु।

विख्यातेन विशाखदत्तकविना यन्नाटकं निर्म्मितम्
मुद्राराक्षसनामकं सुविमलं विद्वज्जनप्रीतिदम्।
व्यक्तं यत्र च चन्द्रगुप्तचरितं चाणक्यनीत्योर्ज्जितं
तारानाथशर्मणा विवृतं तत् सारयुक्ताक्षरैः॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिता
मुद्राराक्षसस्य विवृतिः समाप्ता॥